# स्फोटवादः

नागेशभट्टकृतः

# SPHOṬAVĀDA

BY

NĀGES'A BHAṬṬA

EDITED BY

VYĀKARAṆAS'IROMAṆI V. KRISHNAMACHARYA

*WITH HIS OWN COMMENTARY*

SUBODHINĪ

THE ADYAR LIBRARY

1946

## PREFACE

THE present publication is a hitherto unpublished work on Sphoṭa-Siddhānta by the famous grammarian and philosopher Nāges'a Bhaṭṭa (Nāgoji Bhaṭṭa) who lived about the end of the seventeenth century A.D. The doctrine of the Eternity of S'abda (the Word) has a most fascinating and ancient history having its roots in the well-known Ṛgvedic hymns to the Goddess of Speech—Vāgdevī. The traditional formulator of this theory according to grammarians is Sphoṭāyana Ṛṣi, as referred to at the end of the present publication. As developed by grammarians like Bhartṛhari, the theory of Sphoṭa links up the transient phenomenon of the pronounced word to Brahman as S'abda-Brahman, the eternal Noumenon of every form of significant sound or word and indeed of every manifested object of creation. This is a view which strikingly brings up to our mind the conception of Platonic Logos (the Word) and the saying of the Christian scripture "In the beginning was the Word (Logos); the Word was with God; and the Word was God." How close this resemblance is, may be gathered from the following statement appearing in the chapter on Pāṇini-dars'ana of the well-known work *Sarvadars'anasaṁgraha* by Mādhavācārya: "The Word called Sphoṭa which is without parts (Niravayava) and eternal and the cause of the world

is verily Brahman. It has been thus declared by Bhartṛhari in Brahmakāṇḍa "The indestructible Noumenon of S'abda (*Akṣaram S'abdatattvam*) is Brahman without beginning or end (Anādinidhanam). From this comes the whole creation of the world in the form of all manifested objects." From this standpoint, Sanskrit grammar is not merely a Science of Linguistics or an Art of correct speaking and writing. It is far more than mere Science or Art. It is also a Philosophy with its own Metaphysics. It is even more than this; for it is also a *mokṣa-s'āstra*—a religion pointing a way to *Mokṣa* (Liberation) through the discipline or *upāsanā* of S'abdabrahman (Word-Brahman) conformably to the text "he who is well-versed in Word-Brahman (S'abda-Brahman) attains to the Supreme Brahman :

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।

This is a view which brings the votaries of Grammar into intimate relationship with all fellow-worshippers at the altar of Nādopāsana, including votaries of not only Vyākaraṇa or S'abdas'āstra (Grammar), but also Saṁgīta (Music and Musical Arts), Sāhitya (Poetry and Literary Arts) and Mantras'āstra. This lofty and transcendental conception of S'abda (Word) does not relate, of course, to the transient phenomenon of the spoken and audible word made up of letters pronounced one by one and dying the moment each letter is pronounced but relates to the eternal Word Sphoṭa (the S'abda-Brahman) —that permanent Noumenon indicated by and forming

the root basis of all the transient words and word-phenomena of momentary existence.

The transition of the eternal Sphoṭa or S'abda-Brahman from the highest level to the form of the spoken or audible word or sound at the lowest level is described as occurring in four stages technically known as Parā, Pas'yantī, Madhyamā and Vaikharī. Parā and Pas'yantī are too subtle to be comprehended by our sense-organs except by the yogins. The Madhyamā stage may be comprehended through practices like *japa* while the Vaikharī is what is uttered by the vocal organs and is capable of being heard by ordinary folk. Parā is the Eternal Noumenon—S'abda-Brahman originating from Kuṇḍalinī in Mūlādhāra-cakra. This is also referred to as Nāda. Pas'yantī originates from Svādhiṣṭhāna-cakra in the navel region. Both Parā and Pas'yantī are classed as Sūkṣma (subtle) Sphoṭa. Madhyamā originates from Anāhata-cakra in the region of the Heart where the voice of the silence is heard. It is also referred to as Āntara (internal) Sphoṭa. Vaikharī originates in Vis'uddha-cakra in the region of the throat and is manifested as Bāhya (external) Sphoṭa through utterance by the vocal organs and is capable of being heard by others. It is because of this nexus that we can, if we will, place ourselves in tune with the infinite Sphoṭa (S'abda-Brahman), through the Vaikharī sound or Bāhya-Sphoṭa if we practice the necessary discipline. The erudite Editor has referred at some length to these and other fascinating topics in his learned introduction in Sanskrit.

When our Editor, Pandit Krishamacharya, spoke to me about the publication of the present work *Sphoṭa-vāda* on the basis of two available manuscripts—one deposited at the Adyar Library and the other obtained from the Government Oriental Manuscripts Library at Madras—I suggested to him, having in mind his vast erudition in Vyākaraṇa, Sāhitya, Vedānta and other Dars'anas generally, it was highly desirable that a commentary on the work be written by him so that the publication may be brought out with his learned commentary. I am thankful to say that the suggestion was accepted with enthusiasm and thus it happens that the present publication includes both the original text and the learned editor's commentary aptly termed the *Sūbodhinī*. May this endeavour be pleasing in the sight of the Lord and serve as homage to the Guruparaṁparā of Sphoṭāyana Ṛṣi, Bhartṛhari and others in their line is the fervent prayer of the editor and myself. In this we are but echoing the sentiments of our author Nāges'a Bhaṭṭa who wrote as follows at the end of the present publication :

वैयाकरणनागेशः स्फोटायनऋषेर्मतम् ।
परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः ॥

The teaching of Sphoṭāyana Ṛṣi has been arranged and expounded herein by the grammarian Nāges'a. May Jagadīs'vara be pleased by this offering.

*Adyar Library* G. SRINIVASA MURTI,
9 December, 1946 *Honorary Director*

# विषयानुक्रमणिका

पुटाङ्काः

स्फोटभेदाः . . . . . १
वर्णस्फोटः . . . . . ५
स्थानिनामेव वाचकत्वम्, नादेशानामिति नैयायिकमतोपन्यासः, तन्निरासश्च . . . . . ५
पदस्फोटः, वाक्यस्फोटश्च . . . . ९
वाक्यशक्तिविषये मीमांसकानां मतम्; तन्निरासश्च . . ११
तात्पर्यस्य न शाब्दबोधहेतुत्वम् . . . . १३
वाक्यशक्तिविषये नैयायिकानां मतम्; तन्निरासश्च . . १६
तत्रैव मतभेदः . . . . . ३९
वाक्यार्थस्य लक्षणया बोध इति मीमांसकानां मतम्; तन्निरासश्च . ५४
पदानामन्विताभिधानस्य स्वाभाव्यात् वाक्यार्थबोधसिद्धिरिति वेदान्तिनामाक्षेपः; तन्निरासश्च . . . . ५६
शब्दप्रामाण्ये वैशेषिकाणामाक्षेपः; तन्निरासश्च . . ६१
वाक्यशक्तौ भाट्टानामाक्षेपः; तन्निरासश्च . . . ६६
सखण्डस्फोटे व्यवस्था . . . . ६९
अखण्डस्फोटः . . . . . ७०
स्फोटव्यञ्जकाः . . . . . ७६
वर्णविषये मीमांसकानां मतम्; तन्निरासश्च . . . ८४
अखण्डस्फोटपक्षे शास्त्रस्योपयोगः . . . ९२

पृष्ठाङ्काः

वर्णस्फोटपदस्फोटविषये मतभेदः . . . . ९९
जातिस्फोटः . . . . . ९६
ब्रह्मसत्तैव जातिः, तस्या एव वाच्यत्वं वाचकत्वं चेति परमसिद्धान्तस्योपन्यासः . . . . १००
ग्रन्थोपसंहारः . . . . . १०२

श्रीः

# उपोद्घातः

सर्वोऽप्ययं जीवलोकः शब्देनैवाधिगतहेयोपादेयविवेको जहाति जिहासितमुपादत्ते चोपादित्सितमिति सर्वजनीनमेतत् । किं बहुना ; शब्दाभावे न धर्माधर्मव्यवस्था, न गुरुशिष्योपदेशसंप्रदायः, न चाप्युत्तमाधमर्णव्यवहारादिकमिति सर्वमेवेदं जगज्जनुषान्धमिव प्रत्यस्तमितनिखिलव्यापारमसत्कल्पतामापद्येत । यदाहुः—

[1] "इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥"

इति । स चायं शब्दः प्रत्यक्षादिषु बोधौपयिकेषु प्रमाणेष्वन्यतमः परिगण्यते । यदाह—

[2] "प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥"

इति । अत्र शास्त्रमिति शब्दप्रमाणमुच्यते । इदं च प्रमाणत्रयं वेदान्तिनां सांख्यानां च निरीश्वरसेश्वरभिन्नानामप्यभिमतम् । एतदेवोपमानेन सह चत्वारि प्रमाणानीति गौतमीयाः । एतान्येवार्थपत्त्या सह पञ्च प्रमाणानीति

[1] *Kāvyādars'a*, 1-4.
[2] *Manusmṛti*, 12-105.

A

प्राभाकराः । अभावमपि संयोज्य प्रमाणषट्कं कौमारिलाः, व्यवहारदशायां प्रायेण तदनुसारिणो वेदान्त्येकदेशिनश्च । एतदेव षट्कं संभवैतिह्याभ्यां सह प्रमाणाष्टकं पौराणिकाः । तदेवं मन्वादीनां सर्वेषामपि तान्त्रिकाणां शब्दप्रामाण्ये न विवादो विना लौकायतिकसौगतवैशेषिकान् । प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः । प्रत्यक्षानुमाने द्वे एवेति सौगता वैशेषिकाश्च । वैशेषिकाः शब्दमनुमानेन गतार्थयन्तीति विशेषः । स चायं शब्दः किंस्वरूप इति विमर्शे बहुधा मन्यन्ते तान्त्रिकाः ।

तत्र जैमिनीयाः—श्रोत्रग्राह्या वर्णा एव शब्दः । तेषामेव च वाचकत्वम् । ते च कण्ठताल्वाद्यभिघातव्यङ्ग्या इति संगिरन्ते । यदाहुः— "[1]अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति । शालिकोऽपि—"[2]कः शब्दोऽभिमतः? वर्णाः, तेषामेव श्रोत्रग्राह्यत्वात्" इति । दिनान्तरानुभूतस्याधुनानुभूयमानत्वे 'सोऽयं गकारः' इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे "[3]तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति" इति न्यायात् तेषां वर्णानां नित्यत्वम्, सर्वदेशेषूपलम्भात् विभुत्वम्, लाघवाच्च प्रतिवर्णमेकत्वं च सिद्धम् । ननु 'सोऽयं गकारः' इति प्रत्यभिज्ञायां गत्वरूपजात्यवच्छिन्नप्रतियोगिताकभेदाभावो विषय इति न तया तेषामेकत्वं नित्यत्वं चेति चेत्; अत्र वदन्ति—यद्यैक्यप्रत्यभिज्ञा जातिनिबन्धना स्यात् तदा द्वयोर्घटयोः 'सोऽयं घटः' इति प्रत्यभिज्ञा स्यात्, तत्रापि घटत्वजातेरेकत्वात् । ततश्चानिष्टप्रसङ्गदुःस्थोऽयं वाद इति सा प्रत्यभिज्ञा व्यक्त्येकत्वादेव समर्थनीया । वस्तुतस्तु गत्वाख्या जातिरङ्गीकर्तुं न शक्यते । देशकालभेदेन प्रतीयमानस्यापि गकारस्य 'स एवायं

[1] *S'ābarabhāṣya*, 1-1-1.

[2] *Prakarṇapañcikā*, page 87, Chowkhamba Sanskrit Series, 17.

[3] *S'lokavārtika*, p. 823, Verse 366, „ 3.

गकारः' इत्येकत्वावगाहिबुद्धिग्राह्यत्वेनाकाशवदेकत्वे सिद्धे नैकव्यक्तिका गत्वजातिः सिध्यति, व्यक्त्यभेदस्य जातिबाधकत्वात्। ननु बहवो गकाराः सन्तु; तथा चानेकव्यक्तिसमवेतत्वात् गत्वाख्या जातिः सेत्स्यतीति चेत्, न; देवदत्तेन कस्मिंश्चित् श्लोके पठिते 'देवदत्तेन दशकृत्वो गकार उच्चारितः' इत्येव प्रतीतिर्जायते। न तु 'दश गकारा उच्चारिताः' इति तदेकत्वस्यैवानुभवसिद्धत्वात्। ननु द्रुतमध्यविलम्बिततारमन्द्रादिभिन्नेषु गकारेषु 'सोऽयं गकारः' इति प्रत्यभिज्ञायमाना जातिः कथमपह्नोतुं शक्यत इति चेत्; सत्यमस्ति प्रत्यभिज्ञा। सा तु व्यक्त्येकत्वादेवोपपन्ना। द्रुतादिविरुद्धधर्मावभासस्तु व्यञ्जकध्वनिभेदकृत इति न व्यक्तिभेदमापादयितुमलम्। तस्मात् गकारादिव्यक्तेरेकत्वमेव। तत्सिद्धं वर्णा एव शब्दः, ते च नित्या विभवश्चेति। त एव च वर्णाः समुदिताः पदवाक्यव्यपदेशभाजोऽर्थप्रत्यायका भवन्ति। तथा हि—यद्यपि वर्णानां प्रत्येकमर्थबोधकत्वं नास्ति, अदर्शनात्; तथापि समुदितानां तेषां तत्संभवति। यथा बल्बज एकोऽश्वबन्धनेऽसमर्थः; तत्समुदायश्च रज्जुभावमापन्नस्तत्र समर्थो भवति। रथाङ्गानि च विहतानि प्रत्येकं व्रजि प्रत्यसमर्थानि; तत्समुदायश्च रथः समर्थः—तथा प्रत्येकं वर्णानामर्थाबोधकत्वेऽपि संहतानां तेषां तद्भवति। ननु वर्णानां नित्यत्वे तेषां समुदायस्यार्थप्रत्यायकत्वं न संभवति, विकल्पासहत्वात्। तथाहि; तत्समुदायस्य न सत्तयार्थबोधकत्वम्, सर्वदार्थबोधापत्तेः। नापि गृहीतस्य, समुदायग्रहणासंभवात्। कण्ठताल्वाद्यभिव्यञ्जितानामेव वर्णानां ग्रहणसंभवेन क्रमव्यञ्जितानां क्रमेणैव ग्रहणमिति तेषां समुदाय एवाप्रसिद्धः, कुतस्तद्ग्रहः? कुतस्तरां तेनार्थप्रतीतिरिति चेत्; अत्राहुः—वर्णानां स्वरूपेण साहित्यस्य दुर्घटत्वेऽपि संस्कारद्वारा तत्संपाद्यार्थप्रत्यायकत्वं ब्रूमः। यथा ह्याग्नेयादीनि कर्माणि क्रमजातान्यपि प्रत्येकमवान्तरापूर्वं

कल्पयित्वा तद्द्वारा यागस्योपकुर्वन्ति, एवं वर्णा अपि क्रमेणानुभूयमानाः प्रत्येकं संस्कारं कल्पयित्वा तद्द्वारार्थप्रतीतिं जनयन्ति। यदाहुः—[1] "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः" इति। ननु विषमोऽयं दृष्टान्तः। आग्नेयादिजन्यमवान्तरापूर्वं यागजं परमापूर्वं जनयेदिति संभवदुक्तिकम्। प्रकृते तु संस्काराणां स्मृतिजनकत्वमेव स्वभाव इति सर्वानुभवसिद्धम्, नार्थप्रतीतिजनकत्वमिति चेत्; हन्त तर्हि सर्वानुभवसिद्धमिति वदतस्तव सर्वशब्देन कोऽभिप्रेतः? सर्वोऽपि व्युत्पन्नलोक इति चेत्; किमिदं व्युत्पन्नत्वं भवदभिमतकतिपयपुरुषमात्रविश्रान्तं मन्यसे? किं नु मीमांसकास्तत्कोटावन्तर्भावं नार्हन्ति? तस्मात् संस्काराणां स्मृतिजनकत्ववदर्थप्रतीतिजनकत्वमप्यनुभवसिद्धमेव। यदाह—

[2] "यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम्।
अर्थान्तरेषु सामर्थ्यं न तस्य प्रतिषिध्यते॥"

इति। परे त्वङ्गीकृत्यापि संस्काराणां स्मृतिमात्रजननसामर्थ्यं पक्षान्तरमपि वर्णयन्ति। यथा प्रत्येकवर्णानुभवजन्यो हि भावनानिचयः स्मृतिमेकामुपजनयति; तस्यां च स्मृतौ सर्वे वर्णा युगपत्प्रतिभान्तीति तेषामेव वाचकत्वमिति न काप्यनुपपत्तिरिति। यदाहुः—

[3] "यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परम्।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम्॥"

इति। नावश्यमनुभवगोचरस्यैव यौगपद्यस्यार्थकरत्वम्, किं तु स्मृतिगोचरस्यापीति भावः। प्राभाकरास्तु—प्रकृते संस्कारद्वयं कल्पयन्ति। एकः

[1] *S'ābarabhāṣya*, 1-1-1.
[2] *S'lokavārtika*, page 536, verse 102, Chow. Sans. Series, 3.
[3] ,, page 538, verse 109, ,,

स्मृतिहेतुः, अपरस्त्वर्थप्रतीतिहेतुरिति। यदाहुः—[1] "वर्णेष्वेव प्रत्यक्षेष्वर्थप्रतीत्युपपत्तये कश्चिद्विशेष आश्रयितुं युक्तः, सर्वपूर्वपूर्वोपलम्भसापेक्षत्वादन्त्यवर्णस्य। उपलम्भस्य च क्षणिकतया स्वतो विशेष्टुमशक्यत्वात् पूर्वपूर्ववर्णोपलम्भजन्यः संस्कार एवाश्रीयते। स च स्मृतिहेतोः संस्काराद्भिन्न एव। स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्रैवोपलम्भान्तरं जनयितुमलम्, नार्थान्तर इत्यर्थविषया प्रतीतिस्ततोऽनुपपन्नेति तदतिरेकिणः संस्कारस्याश्रयणम्" इति। पदार्था येन क्रमेणानुभूतास्तेनैव क्रमेण स्मर्यन्त इत्यत्र तु न मानम्। अत एव प्रत्येकदृष्टेषु घटेषु 'शतं घटाः' इति समुदितस्य स्मरणं जायते। तदेवं वर्णा एव शब्दः। ते च विभवो नित्याश्च। तथा सर्वोऽपि गकार एक एव। एवमन्येऽपि। तथा पदानि वाक्यानि च वर्णसमुदायरूपाण्यपि प्रत्येकमेकानि नित्यानि विभूनि च। अत एव "[2]औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इति शब्दार्थसंबन्धस्य नित्यत्वं सूत्रितं परमर्षिणा। न हि पदादीनामनित्यत्वे तत्संबन्धस्य नित्यत्वं युज्यते। ननु मीमांसकैः न वैयाकरणैरिव पदं वाक्यं च वर्णातिरिक्तमङ्गीक्रियते। किंतु क्रमसमुदिता वर्णा एव पदम्, क्रमसमुदितानि पदान्येव वाक्यमित्युच्यते। वर्णानां च नित्यविभूनां न स्वतः क्रमः संभवति। किंतु स पुरुषप्रयत्नजनितध्वनिकृत इति वक्तव्यम्। पुरुषप्रयत्नस्य च तदिच्छाधीनत्वात् तज्जनितध्वनिरप्यनित्यः। अतश्च तत्कृतः क्रमोऽप्यनित्य एवेति तद्विशिष्टतया तदधीनस्वरूपाणां पदानां वाक्यानां चानित्यत्वमकामेनाप्यङ्गीकरणीयमिति कथं तन्नित्यत्ववाचोयुक्तिरिति चेत्; इत्थम्—न तावद्वर्णानां क्रम एव पदं, येनोक्तशङ्काया अवकाशः स्यात्। किं तु क्रमोपलक्षिता वर्णा एव पदं वाक्यं चेति न शङ्कावकाशः। अयमाशयः—

[1] *Prakaraṇapañcikā Pramāṇapārāyaṇa*, page 89, Chow. 17.
[2] *Mīmāṁsāsūtra*, 1. 1-5.

स्यादयं दोषो यदि क्रमो विशेषणं स्यात्; उपलक्षणं तु स इति। क्रमः पदवाक्यप्रतीतावुपयुज्यते; न तु पदे वाक्ये वा स्वधर्ममुपनिबध्नाति। यदाहुः—

[1]"तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः।
तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम्॥"

इति। ते चेमे वर्णा द्रव्यम्। द्रव्यत्वं चैषामनुमानात् सिध्यति। तथाहि— शब्दो द्रव्यं साक्षादिन्द्रियसंबन्धवेद्यत्वात् घटवदिति। तथा संख्यावेगाश्रयत्वाच्च द्रव्यत्वं सिध्यति। 'द्वौ शब्दौ, त्रयः शब्दाः' इति हि प्रतीतिः। शब्दो द्विविधः—ध्वनिर्वर्णश्च। तत्र ध्वनिर्वायुगुणो वर्णव्यञ्जकः। वर्णस्तु द्रव्यं ध्वनिव्यङ्ग्यम्। तारत्वादिकं ध्वनिधर्मो वर्णेष्वारोप्यत इति केचित्। परे तु तद्वर्णधर्म एव। तदाश्रयत्वादपि वर्णानां द्रव्यत्वमिति वदन्ति। य एव गकारो देवदत्तेन तारो गृह्यते स एव यज्ञदत्तेन मन्द्रो गृह्यत इति तारत्वमन्द्रत्वादीनामनियतत्वादविरोध इति तेषामाशयः। आकाशाख्यद्रव्याश्रितत्वात् शब्दस्य गुणत्वव्यवहारः केषांचित्।

नैयायिका अपि वर्णानामेव समुदितानां पदभावमापन्नानामर्थप्रत्यायकत्वमाहुः। यथोक्तम्—[2]"वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति। श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसंधत्ते। प्रतिसंधाय पदं व्यवस्यति" इति। तथान्यत्र च—[3]"किं तर्हि प्रातिपदिकम्? क्रमवद्वर्णसंहतिरिति ब्रूमः" इति। अन्यत्र च—[4]"किं पुनरिदं पदं नाम? किं च वाक्यमिति? वर्णसमूहः पदम्, पदसमूहो वाक्यम्"

[1] *S'lokavārtika*, page 807, verse 305, Chow. Sans. Series, 3.
[2] *Nyāyasūtrabhāṣya*, 3-2-62.
[3] *Nyāyalīlāvatī*, page 671, Chowkhamba Sans. Series, No. 64.
[4] *Nyāyamañjarī*, page 336, Kās'i ,, 106.

इति । परं तु मीमांसकानां मते वर्णा नित्याः । नैयायिकानां त्वनित्याः । किंच नैयायिकानां मते गकारादिव्यक्तयोऽनेकाः । न तु मीमांसकानामिवैका गकारव्यक्तिः । तथाहि—देवदत्तयज्ञदत्तविष्णुमित्रा युगपदेव गकारान् भिन्नभिन्नेषु देशेषूच्चारयन्ति । न हि गकारस्यैकत्वे तत्संभवति । ननु यथा आदित्यं भिन्नभिन्नाः पुरुषा भिन्नभिन्नेषु देशेषु युगपत्पश्यन्ति तद्वदत्रापि भविष्यतीति चेत्; विषमो दृष्टान्तः—आदित्यो हि स्थायी महद् द्रव्यं च भवतीति युक्तं तत्र बहुभिर्बहुत्र युगपद्दर्शनम् । गकारस्तु ताल्वाद्यभिघातजन्यो हेत्वपगमे स्वयमप्यपैतीति न स्थायी न वा महद् द्रव्यमिति न शक्यते तथोपगन्तुम् । अतश्च गकारादिव्यक्तीनां परस्परभेदोऽभ्युपेयः । ननूक्तं स भेदो व्यञ्जकध्वनिकृत इति । सत्यमुक्तम् । दुरुक्तं तु तत् । यदि हि व्यञ्जकभेदकृतो गकारभेदप्रत्ययस्तर्हि यरलवादिभेदप्रत्ययोऽपि तथैव स्यादिति, हन्त जितं सकलवर्णविकल्पातीतमेकमनवयवं नित्यं शब्दतत्त्वमङ्गीकुर्वता स्फोटवादिना । तर्हि 'सोऽयं गकारः' इति प्रत्यभिज्ञायाः का गतिरिति चेत्; साध्वी गतिः—जातिनिबन्धना सादृश्यनिबन्धना वा प्रत्यभिज्ञा 'सोऽयं धान्यराशिः' इतिवत् । गकारव्यक्त्येकत्ववादिनो मीमांसकस्य हि गत्वजात्यङ्गीकारे दुरवस्था । तदनेकत्ववादिनां नैयायिकानां तु गत्वजातिः सूपपादेति न किंचिदनुपपन्नम् । किंच उदात्तानुदात्तस्वरितानुनासिकाननुनासिकादिभेदभिन्नानामकाराणां विरुद्धधर्मणामेकत्ववचनमनुभवविरुद्धमेव । ननु प्रातीतिकोऽपि स भेदो ध्वनिरूपोपाधिनिबन्धनः स्फटिके रक्तताप्रत्ययवदिति चेत्; न, वैषम्यात् । स्फटिकस्य शुद्धस्य दृष्टत्वात् जपाद्युपाधिनिमित्तो रक्तताप्रत्ययः संभवति । वर्णानां तु नित्यमेवोदात्ताद्यन्यतमविशेषवतामेव प्रतिभासात् तद्रहितानुपलब्धेश्च नैसर्गिक एवायं भेदः । तद्यथा बुद्धीनां

घटपटादिविषयविशेषशून्यानामसंवेदनात् नानात्वम्, तथा वर्णानामपीति सुगमोऽयं पन्थाः। ननु वर्णनित्यत्ववादिनां मते वर्णानां सहभावः कथमपि पूर्वोक्तरीत्योपपद्यताम्। तदनित्यत्ववादिनां तु कथं तदुपपत्तिः? क्रमोत्पन्न-प्रनष्टानां तेषां सहभावस्य कथमपि दुरुपपादत्वादिति चेत्; अत्र वदन्ति—क्रमोत्पन्नानामपि तेषां संस्कारद्वारा कार्यकरत्वं संभवति[1]। यथा क्रमोत्पन्ना अपि प्रत्येकग्रासाः समुदितास्तृप्तिमुत्पादयन्ति तद्वत्। एकस्मि-न्नपि हि ग्रासे हीयमाने नोदरंभरिस्तृप्तिमुपयाति। अतः समस्ता एव ग्रासास्तृप्तेः कारणम्। न च समस्ता ग्रासा युगपत्प्रयोक्तुं शक्याः। एवं क्रमवर्तिनोऽपि वर्णा एवार्थाभिधायिनो भवन्ति। ननु संस्कारस्य स्मृति-जननैकस्वभावस्य कथमर्थप्रतीतिजनकत्वमिति चेत्, अत्र मीमांसकैरेवोक्तः समाधिः। अथ वा मास्तु संस्कारस्यार्थप्रतीतिजनकत्वम्; तथापि स स्मृतिद्वारार्थस्य प्रत्यायको भविष्यति। पूर्ववर्णेषु संस्कारात् स्मरणम्। अन्त्यवर्णे श्रावणोऽनुभव इति स्मर्यमाणानुभूयमानवर्णकरणकोऽर्थप्रतीतिरिति को दोषः? न हि स्मर्यमाणानामेवानुभूयमानानामेव वार्थप्रत्यायकत्वम्, न त्वनुभूयमानस्मर्यमाणानामिति नियमोऽस्ति। ननु तथापि ज्ञानयौगपद्यं दोष इति चेत्; ज्ञानयोर्हि यौगपद्यं दोषः; न तु संस्कारज्ञानयोः। अथ वा पूर्ववर्णानां स्मरणे अन्त्यवर्णानुभवे च ज्ञानयौगपद्यप्रसङ्ग इति वरमन्त्य-वर्णोऽपि स्मर्यमाणः प्रत्यायकोऽस्तु। तदेवमेकस्मृत्यारूढाः सर्वे वर्णाः समुदिता अर्थप्रतीतिं जनयन्तीति न कोऽपि दोषः। ननु नैयायिकाः किल स्मृत्यप्रामाण्यवादिनः। तत्कथं तेषां मते वर्णस्मृत्यार्थप्रतीतिरिति चेत्; एवम्—अचिरनिर्वृत्तानुभवजनिता तत्समनन्तरभाविनी स्मृतिरप्यनुभवायते। [2]वस्तुतस्तु स्मृतेः प्रामाण्यं दुरपह्नवम्। स्मृत्यैव हि जगतां कृताकृतप्रत्यवेक्ष-

[1] Cf. *Nyāyamañjari*, page 344, Kāśi Sans. Series, 106.
[2] Cf. *Nyāyapariśuddhi*, page 484, Chow. ,, 51.

णादिसिद्धिः । स्मृत्यैव हि कवयः काव्यानि कवयन्ति । स्मृत्यैव हि शब्दानुमानयोः प्रवृत्तिः । पूर्वानुभवस्यैव तानि प्रयोजनानीति चेत् ; सर्वजगदादिकारणस्य ब्रह्मसंकल्पस्यैव किं न स्युः ? एवं चानुभवस्यापि न प्रामाण्यसिद्धिः । स्मृत्यप्रामाण्यवादिनोऽपि वैशेषिकास्तां याथार्थ्यात् विद्याकोटौ पठन्ति । तत एव तदेकदेशिभिरपि तत्प्रामाण्यं स्वीकृतम् ।

औपनिषदा अपि वर्णानामेव समुदितानां पदवाक्यव्यपदेशजुषां वाचकत्वमिच्छन्ति । तच्च "[1]प्रत्येकवर्णानुभवभावितभावनानिचयलब्धजन्मस्मृतिदर्पणारूढवर्णमालात्मना" इति वदन्ति । यदाहुः—

[2] "वर्णाः स्वज्ञानसंस्कारैः संभूय स्मृतिकारिभिः ।
क्रमेणैकस्मृतौ बुद्धा बोधयन्त्यर्थमञ्जसा ॥ "

इति । अन्यत्र च—"[3]सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति । तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतीतिर्न विरुध्यते । वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसंबन्धाश्च सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्ति" इति । तथा [4]"शब्दस्यैकरूपत्वमपि न साधीयः, गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्" इति । एवम् [5]" उक्तशक्तिज्ञानजन्यं ज्ञानमागमः । तत्साधनत्वात् वर्णात्मकः शब्दोऽप्यागम इति गीयते । ननु न तावद्वर्णाः प्रत्येकं गवाद्यर्थ-

[1] *Tattvabindu*, page 7, Aṇṇamalai University Series, No. 3.
[2] *S'ābanirṇaya*, verse 12.
[3] *Brahmasūtra-s'āṁkarabhāṣya*, 1-3-28.
[4] *S'rībhāṣya*, 1-1-1.
[5] *Padārthatattvanirṇaya*, Fol. 50, Adyar Library MS.

बोधकाः, तथा अदृष्टेरनिष्टेश्च । नापि तत्समुदायः, क्रमभाविनां क्षणिकानां समुदायतदुपलभ्ययोरभावात् । का तर्हि पदस्य गवाद्यर्थबोधकस्य वाक्यादेश्च गतिः? स्फोट इति चेत्, न; तन्मानाभावात् । गवादिपदादिष्वेकः शब्द इति प्रत्ययोऽत्र मानम्, वर्णेषु तदसंभवादिति चेत्—न; वर्णादिषु क्रमोपलब्धेष्वप्यन्त्यवर्णोपलब्ध्यनन्तरमेकस्मृत्यारूढेष्वेकार्थबोधकेष्वेकः शब्द इति प्रत्ययोपपत्तेः । अवश्यं चैकस्मृतिसमारोहेण वर्णसमुदायोऽभ्युपेयः, अन्यथा स्फोटाभिव्यक्तेरप्यभावप्रसङ्गात्; तस्यैकैकवर्णानभिव्यङ्ग्यत्वात् । तस्मात् वर्णा एव बोधकाः शब्द इत्यास्थेयम्" इति । ते चेमे वर्णा मीमांसकानामिव केषांचिन्मते नित्या विभवश्च । यदाह—[1] "न च तथेह वर्णानां नित्यानां विभूनां चास्ति वास्तवः क्रमः" इति । अन्येषां तु मते तेऽनित्याः । यदाह—[2] "वर्णानित्यत्वं तु न श्रुत्यादिविरुद्धम् । प्रत्युतानुकूलमेव" इति ।

एवं सांख्या अपि कार्याणां वर्णानामेव वाचकत्वमिच्छन्तो वैयाकरणाभिमतं स्फोटवादं भाट्टाभिमतं वर्णनित्यत्वं च निराहुः । यदाहुः—[3] "प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः । न शब्दनित्यत्वं कार्यताप्रतीतेः" इति । व्याचख्युश्चैवम्—[4] "प्रत्येकवर्णेभ्योऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकं पदं स्फोट इति योगैरभ्युपगम्यते कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव । स च शब्दविशेषः पदाख्योऽर्थस्फुटीकरणात् स्फोट इत्युच्यते । स शब्दोऽप्रमाणिकः । कुतः? प्रतीत्यप्रतीतिभ्याम् । स स्फोटाख्यः शब्दः किं प्रतीयते, न वा? आद्ये येन वर्णसमुदायेनानुपूर्वीविशि-

[1] *Bhāmati* page 260, Nirṇayasagara Press Bombay, 1904.

[2] *Nyāyapariśuddhi*, page 12. Brahmavādin Press, Madras, 1913.

[3] *Sāṁkhyasūtra*, 5—57 and 58.

[4] *Sāṁkhyasūtrabhāṣya*, 5—57 and 58.

ष्टेन सोऽभिव्यज्यते तस्यैवार्थप्रत्यायकत्वमस्तु ; किमन्तर्गडुना तेन ? अन्त्ये त्वज्ञातस्य स्फोटस्य नार्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पना । 'स एवायं गकारः' इति प्रत्यभिज्ञाबलात् वर्णनित्यत्वं न युक्तम्, 'उत्पन्नो गकारः' इत्यादिप्रत्ययेनानित्यत्वसिद्धेः । प्रत्यभिज्ञा च तज्जातीयताविषयिणी । अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तिः" इति ।

पातञ्जला योगास्तु वर्णानां वाचकत्वमनुपपन्नमाचक्षाणा वर्णव्यतिरिक्तस्य पदस्य वाक्स्य च स्फोटाभिधानस्य वाचकत्वमिच्छन्ति । यदाहुः —[1] "शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्" इति । तदुपरि भाष्यं च—[2] "तदेकं पदमेकबुद्धिविषयमेकप्रयत्नाक्षिप्तमभागमक्रमवर्णं बौद्धमन्त्यवर्णप्रत्ययव्यापारोपस्थापितं परत्र प्रतिपिपादयिषया वर्णैरेवाभिधीयमानैरुच्चार्यमाणैः श्रूयमाणैश्च श्रोतृभिरनादिवाग्व्यवहारवासनानुविद्धया लोकबुद्ध्या सिद्धवत्संप्रतिपत्त्या प्रतीयते । तस्य संकेतबुद्धितः प्रविभागः" इति । तद्व्याख्यायां वाचस्पतिश्चाह—[3] "अयमभिसंधिः—अर्थप्रत्ययो हि वर्णैर्नियतक्रमतया परस्परमसंभवद्भिरशक्यः कर्तुम् । न च संस्कारद्वाराग्नेयादीनामिव परमापूर्वं स्वर्गं वा जनयितव्ये नियतक्रमाणामपि साहित्यमर्थबुद्ध्युपजनने च वर्णानामिति सांप्रतम्. विकल्पासहत्वात् । स खल्वयं वर्णानुभवजन्यः संस्कारः स्मृतिप्रसवहेतुः ? अन्यो वाग्नेयादिजन्य इवापूर्वाभिधानः ? न तावदनन्तरः, कल्पनागौरवापत्तेः । स एव तावददृष्टपूर्वः कल्पनीयः । तस्य च क्रमवद्भिर्वर्णानुभवैरेकस्य जन्यत्वं न संभवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेति गौरवत् । स्मृतिफलप्रसवानुमितस्तु संस्कारः स्वकारणानुभवविषयनियतो न

[1] *Pātanjalayogasūtra*, 3—17.

[2] *Pātañjalayogasūtrabhāṣya*, 3—17.

[3] *Pātañjalayogasūtrabhāṣyavyākhyā*, 3—17.

विषयान्तरे प्रत्ययमाधातुमुत्सहते । अन्यथा यत्किंचिदेवैकैकमनुभूय सर्वः सर्वं जानीयादिति । न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचका इति सांप्रतम्, क्रमाक्रमविपरीतक्रमानुभूतानां तत्राविशेषेणार्थधीजननप्रसङ्गात् । न चैतत्स्मरणज्ञानं पूर्वानुभववर्तिनीं परापरतामपि गोचरयितुमर्हति । तस्मात् वर्णेभ्योऽसंभवन्नर्थप्रत्यय एकपदानुभवमेव स्वनिमित्तमुपकल्पयति " इति ।

वैयाकरणास्तु—वर्णानां वाचकत्वासंभवात् तेभ्योऽन्यत् स्फोटाख्यं शब्दतत्त्वमर्थप्रतीतिजनकं प्रतिजानते । तथाहि—वर्णानामेव वाचकत्ववादिन एवं प्रष्टव्याः—वर्णाः किं व्यस्ता अर्थं प्रत्याययन्ति, उत समस्ताः? इति । न तावद्व्यस्ताः, एकैकवर्णश्रवणेऽप्यर्थप्रतीतिप्रसङ्गात्; द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेश्च । ननु प्रथमवर्णश्रवणेऽस्पष्टं प्रतीयमानोऽपि पदार्थो द्वितीयादिवर्णश्रवणे स्पष्टं स्पष्टतरं च प्रतीयते; यथा रत्नपरीक्षकाणां प्रथमदर्शने रत्नरूपममलमप्रकाशमानमपि पुनः पुनः परीक्षकाणां चरमे दर्शने चकास्ति निरवद्यं रत्नतत्त्वमेवमिहापि प्रथमवर्णश्रुतावव्यक्तगम्येऽर्थे व्यक्ततरप्रतीत्यै वर्णान्तराणि प्रयुज्यन्त इति चेत्—न; एवं सति कूपयूपसूपादावर्थान्तरप्रतीत्यनापत्तेः । तथाहि—कूप इत्यत्र ककारेण प्रतीयमानोऽप्यन्धुः ऊकारेण पकारेण च यदि स्पष्टतरं प्रत्याय्यत इत्युच्यते, तर्हि ऊकारपकारयोरन्धुबोधकत्वमुक्तप्रायं स्यात् । तदा यूप इत्यत्रापि ऊकारपकाराभ्यामन्धुप्रतीतिः स्यात् । एवं सूप इत्यत्रापीति महद् दौर्घट्यमापद्येत । नापि समस्ता इति द्वितीयः पक्षः । वर्णानां सामस्त्यमेवासंभवि । कुतस्तस्य प्रत्यायकत्वम्? नैयायिकानां मते वर्णानामाशुविनाशितयोत्पन्नविनष्टानां सामस्त्यं दुर्वचम् । मीमांसकानां मते यद्यपि नित्या वर्णाः, तथापि तैः सर्वदा सर्वत्रार्थप्रतीत्यापत्त्या चक्षुरादीनामिव न तेषां केवलं सत्तयार्थप्रत्यायकत्वम् । किं

तु धूमादीनामिव गृहीतानामेव तथात्वमिति वक्तव्यम्। ग्रहणं च तेषां श्रावणप्रत्यक्षाधीनमिति प्रयत्नस्थानकरणैः क्रमेणोच्चरितानामेवेति वक्तव्यम्। तथाच द्वितीयवर्णोच्चारणे प्रथमवर्णोच्चारणहेतुप्रयत्नादीनां विनाशात् तदुच्चारणस्यापि नाश इति कुतः सामस्त्यं ग्रहणे भवितुमर्हति? तदाह—[1]"यावत् गकारे वाक् वर्तते न तावदौकार इति येनैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रयुज्यते तथा तृतीयस्तथा चतुर्थः" इति। यत्तूच्यते—उच्चारणस्य नष्टत्वेऽपि पूर्वपूर्ववर्णजनितसंस्कारसचिवोऽन्त्यवर्णग्रहः प्रत्यायक इति, तदपि दुर्वचम्। संस्कारो हि यदनुभवजनितस्तद्विषयकं स्मरणमेव जनयेत्, न पुनरर्थप्रतीतिमपि। नन्वत्र समाधिः पूर्वमेवोक्तः—

> [2]"यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम्।
> अर्थान्तरेषु सामर्थ्यं न तस्य प्रतिषिध्यते॥"

इति चेत्; मैवम्। न ह्येवं प्रतिज्ञामात्रेण वस्तुशक्तिरन्यथाकर्तुं शक्यते। न हि 'अग्नौ शैत्यं न प्रतिषिध्यते' इति प्रतिज्ञामात्रेणाग्निः शीतो भवितुमर्हति। नन्वेवमपि पूर्ववर्णस्मृत्या सहितस्यान्तिमवर्णग्रहस्यार्थप्रत्यायकत्वं भविष्यतीति चेत्; तदपि न। पूर्ववर्णसंस्कारैस्तत्स्मृतिजननसमयेऽन्त्यवर्णग्रह उपरत इति कस्य साहायकं पूर्ववर्णस्मृतिराचरेत्। न च सदसद्वर्णविषयमेकं ज्ञानं भविष्यतीति वाच्यम्, विचारासहत्वात्। न हीन्द्रियमतीतवर्णग्रहणसमर्थम्, न वा संस्कारो वर्तमानवर्णग्राहीति न युगपदिन्द्रियं संस्कारश्चैकां बुद्धिं जनयितुं प्रभवेताम्। ननु मास्तु

[1] *Mahābhāṣya*, 1. 4. 109.

[2] *S'lokavārtika*, page 536, verse 102. Chow. Sans. Series, 3.

नामान्त्यवर्णप्रत्यक्षेण पूर्ववर्णस्मृत्या सहितेनार्थप्रत्ययः, तथाप्यन्त्यवर्णानुभवनाशानन्तरं तद्विषयकसंस्कारेण पूर्ववर्णसंस्कारेण च स्मृतिरेका समुदेति। तस्यां च सर्वे वर्णाः प्रतिभान्तीति तैर्वर्णैरेवार्थप्रतीतिः संभवतीति चेत्, न; प्रतीतिविरोधात्। गौरिति समग्रपदश्रवणसमनन्तरक्षण एव हि गोपदार्थावगमो जायते। स तु मध्ये संस्कारस्मृतिजननविलम्बं न क्षमते। तस्मात् सर्वथा वर्णानां वाचकत्वं न संभवति।

किं च 'शब्दादर्थं प्रतिपद्यामहे, एकं पदम्, एकं वाक्यम्' इति चाबाधिता प्रतीतिः सर्वानुभवसिद्धा। तत्र शब्दादित्येकत्वं न स्फोटाभ्युपगममन्तरोपपादयितुं शक्यम्। वर्णानां वाचकत्वे हि शब्दैरिति बहुवचनेन भाव्यम्, न शब्दादित्येकवचनेन। एवमेकं पदमेकं वाक्यमित्यपि स्फोटमन्तरा नोपपादयितुं शक्यते। ननु वर्णश्रवणे सत्यर्थप्रतीतिः, तदश्रवणे तु नेत्यन्वयव्यतिरेकाभ्यां तद्भावभावित्वेन वर्णानामेवार्थप्रत्यायकत्वमिति चेत्; अत्राहुः—सत्यं वर्णेषु सत्स्वेवार्थप्रतीतिर्नान्यथेति; न तावता वर्णानामर्थप्रत्यायकत्वसिद्धिः, वर्णानां स्फोटव्यञ्जकत्वेनाप्युक्तान्वयव्यतिरेकयोरुपपत्तेः। कण्ठताल्वाद्यभिघातजन्या हि वर्णाः स्फोटं व्यञ्जयन्ति। व्यञ्जकवर्णभेदादविभक्तेऽपि स्फोटे भेदप्रतीतिः। यथा मणिकृपाणादिव्यञ्जकभेदादेकस्मिन्नपि मुखे भेदप्रतीतिः। तदाह—

[1]"यथा मणिकृपाणादौ मुखमेकमनेकधा।
तथैव ध्वनिषु स्फोट एक एव विभिद्यते॥"

इति। तथाच स्फोटशब्दस्य द्विधा व्युत्पत्तिः संप्रदायसिद्धा—स्फुटत्यर्थोऽस्मादिति स्फोटः; स्फुट्यते वर्णैरिति स्फोट इति च। प्रथमव्युत्पत्तौ वाचक इत्यर्थः। द्वितीयव्युत्पत्तौ तु व्यङ्ग्य इत्यर्थः।

[1] *Sphoṭatattvanirṇaya* by S'eṣakṛṣṇa, verse, 11.

अयं च स्फोटो महाभाष्यकारेण भगवता पतञ्जलिना कण्ठरवेणोपवर्णितः । तथाहि—[1]"एवं तर्हि स्फोटः शब्दः । ध्वनिः शब्दगुणः । कथम्? भेर्याघातवत् । तद्यथा भेर्याघातो भेरीमाहत्य कश्चित विंशतिपदानि गच्छति । कश्चित् त्रिंशत् । कश्चिच्चत्वारिंशत् । स्फोटश्च तावानेव भवति । ध्वनिकृता वृद्धिः ।

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥"

इति । अत्र स्फोटपदेन व्यक्तिस्फोटो विवक्षित इति कैयटः । तथान्यत्र च—[2]"अथवा उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति" इति । अत्र जातिस्फोटो विवक्षित इति कैयटः । नागेशस्तु स्फोटवादमिमं स्फोटायनमुन्युपज्ञमाचख्यौ । तथा ह्यत्रैव ग्रन्थान्ते—

[3]"वैयाकरणनागेशः स्फोटायनऋषेर्मतम् ।
परिष्कृत्योक्तवांस्तेन प्रीयतां परमेश्वरः ॥"

इति वदति । अयं च स्फोटः सर्ववागर्थप्रपञ्चोपादानभूतप्रणवरूपः । यः किलेत्थमाम्नायते—[4]"ओंकार एव सर्वा वाक् । सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति । बह्वी पदवाक्यरूपा । नानारूपा घटपटादिरूपा चेत्यर्थः ।

अयमेव च स्फोटो वाक्यपदीये भर्तृहरिणा वर्णितः—

[5]"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जागतो यतः ॥"

[1] *Mahābhāṣya*, 1. 1. 70.
[2] *Mahābhaṣya*, *pratyāhārāhnika*, *sūtra*, 4.
[3] *Sphoṭavāda*, page 102.
[4] Cf. *Laghumañjūṣā*, page 389, Chow. Sans. Series, 46.
[5] *Vākyapadīya*, 1—1.

इति । तथान्तरस्फोटात् बाह्यस्फोटस्योदयोऽन्यत्र पठ्यते । प्रथममान्तर-स्फोटमाह—

[1] "समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥"

इति । यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधादस्माभिरपि श्रूयते स इत्यर्थः ।

[2] "ततोऽभूत् त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥
शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।
येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥
स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।
स सर्वबीजमन्त्रोपनिषद्बीजं सनातनम् ॥"

इति ।

अत्रेत्थं नव्यैः स्फोटवादिभिर्मायावादबद्धश्रद्धैर्विवर्तवादमवलम्ब्य परिष्कृता प्रक्रिया—मूलाधारस्था सूक्ष्मतमा वाक् त्रीणि पर्वाणि व्यतीत्य तूरीये पर्वणि स्थूलरूपमापद्यमाना श्रोत्रोपलभ्या भवति । तेषु च पर्वसु सा क्रमात् परा, पश्यन्ती, मध्यमा, वैखरीति व्यपदेशं लभते । तृतीयं पर्व समारूढा मध्यमाभिधाना वागेवान्तरः स्फोट इति व्यवह्रियते । तथाहि—आदौ परस्य ब्रह्मणोऽविद्यासंवलित-तयेश्वरपदवाच्यस्य[3] "बहु स्यां प्रजायेय" इति स्वयं बहु भवनेच्छा-रूपा सिसृक्षापरनामधेया काचन मायावृत्तिर्जायते । ततो बिन्दु-

[1] *Bhāgavata*, 12-6-37.
[2] *Bhāgavata*, 12-6-39—41.
[3] *Chāndogya-Upaniṣad*, 6-2-3.

शक्तिराविर्भवति । तत्रास्त्यंशत्रयम्—चिदंशः, अचिदंशः, चिदचिन्मिश्रांशश्चेति । तत्र चिदंशो मायाशबलितं ब्रह्म बिन्दुरिति कथ्यते । एवं च चिदचिन्मिश्ररूपं ब्रह्मैव बिन्दुरिति बीजमिति नाद इति च कथ्यमानं नामरूपप्रपञ्चसृष्टावुपादानं निमित्तं च भवतीति ब्रह्मणोऽभिन्ननिमित्तोपादानत्वमौपनिषदं प्रसिध्यतीति वेदितव्यम् । अस्या बिन्दुशक्तेरतिसूक्ष्मतमं शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं नादमात्रमुत्पद्यते । एतदेव शब्दब्रह्म सर्वगतमपि प्राणिनां मूलाधारे कुण्डलिन्यां ज्ञातमर्थं विवक्षोः पुंस इच्छया प्रयत्नपूर्वकं कृतावतरणेन पवनेन संयुज्यमानमभिव्यज्यते । अस्मिन्नेव प्रथमपर्वणि निःष्पन्दं तच्छब्दब्रह्म परा वागित्युच्यते । तथोक्तम्—

[1] "गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥
आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः ।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् ।
देहेऽपि मूलाधारेऽस्मिन्समुद्यति समीरणः ॥"

इति । अस्मिन्नेव पर्वणि वाक् निःष्पन्दा सूक्ष्मतमा भवति । अनन्तरेषु त्रिष्वपि सस्पन्दा क्रमात् सूक्ष्मतरा सूक्ष्मा स्थूला च भवति । इमामेव दशामभिप्रयन् भर्तृहरिः—

[2] "अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥"

इति शब्दतत्त्वं वर्णयति । एतेनास्याः कारिकायाः पश्यन्तीपरत्वं मत्वा

[1] *Saṁgītaratnākara*, 1-2-120, 121, 145 and 146.
[2] *Vākyapadīya*, 1-1.

पश्यन्त्या आविद्यकत्वेनासत्यत्वात् कथं ब्रह्मत्वमिति [1] "असत्या यदि पश्यन्ती पश्यन्ती ब्रह्म चित्रता" इति शिवदृष्टिवचनं निरस्तम्, पराया एव वाचोऽत्र ब्रह्मत्वप्रतिपादनात्। अत एव हरिणा—

[2] "वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥"

इति पश्यन्त्या अपि व्याकरणविषयत्वमुक्तम्। व्याख्यातं चेदं व्याख्यातृभिः—[3] "तत्र स्वपरश्रोत्रविषया वैखरी। मध्यमा हृदयदेशस्था पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम्। पश्यन्ती तु लोकव्यवहारातीता। योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति। परायां तु न" इति। तथान्यत्रापि—[4] "वैखरीस्वरूपं तु तत्र तत्राप्युक्तम्। तथापि किंचिदत्रोच्यते—या किल शब्दब्रह्मणः परापश्यन्तीमध्यमावैखरीरूपासु चतसृष्ववस्थासु प्रथमावस्थायामनाद्यविद्यावासनोपप्लवमानशब्दार्थावबोधरहितपरब्रह्मशब्दवाच्या। अनन्तरमविद्योपाधिवशात् विवर्तमानेषु सकलेषु त्रिष्वपि रूपेषु यत् तृतीयं चतुर्वर्गप्रवृत्त्युपायतया सकलजनोपकारकं रूपं तदेवात्र वैखरीशब्देनोच्यते" इति। पराया वाचोऽविद्योपहितत्वेऽपि ब्रह्मण इव न सत्यत्वहानिरिति मन्तव्यम्। यच्च शब्दविवर्तवादनिराकरणे जयन्तेनोक्तम्—[5] "अथ शब्दब्रह्मैव सृजति जगन्तीत्ययं विवर्तप्रकार उच्यते, सोऽपि

[1] *Sivadṛṣṭi* 2-24.
[2] *Vākyapadīya*, 1—144.
[3] *Laghumañjūṣāvyākhyā Kalā*, page 182. Chowkamba San. Series, 46.
[4] *Karpūramañjarīvyākhyā Padārthadīpikā*, R. No. 2749, page 3937, of the Tri. Cat. of Sans. MSS. of the Madras Govt. Library.
[5] *Nyāyamañjarī*, 2nd part, page 102, Kās'i Sans. Series. No. 106.

न सम्यक्; अचेतनत्वेन शब्दस्येश्वरस्येव स्रष्टृत्वानुपपत्तेः" इति; तदपि न, बिन्दुशक्तिरूपस्य पराख्यस्य शब्दब्रह्मणश्चेतनत्वस्याङ्गीकारात्। एतेन—

[1] "शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे जगुः।
न हि तेषां तयोः सिद्धिर्जडत्वादुभयोरपि॥"

इति शब्दब्रह्मणो जडत्ववचनमपि निरस्तं वेदितव्यम्।

अत्र शब्दतत्त्वस्यार्थरूपेण विवर्ताङ्गीकारान्न तत्र परिणामप्रयुक्त-दोषाणामवसरः। एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्याविभक्तान्य-रूपोपग्राहिता हि विवर्तः, स्वाप्नप्रतिभासवत्। एतेन यदत्र शान्तरक्षितेन—

[2] "नाशोत्पादासमालीढं तस्य शब्दमयं परम्।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते॥"

इति शब्दब्रह्मवादिनां मतमनूद्य,

[2] "इति संचक्षते येऽपि ते वाच्याः किमिदं निजम्।
शब्दरूपं परित्यज्य नीलादित्वं प्रपद्यते॥
न वा तथेति यद्याद्यः पक्षः संश्रीयते तदा।
अक्षरत्ववियोगः स्यात् पौरस्त्यात्मविनाशतः॥
अथाप्यनन्तरः पक्षस्तत्र नीलादिवेदने।
अश्रुतेरपि विस्पष्टं भवेच्छब्दात्मवेदनम्॥"

इति तदुपरि दोषकथनम्, तदस्थान एवेति प्रतीमः। न हि परिणामवादः शब्दब्रह्मवादिनामभिमतः, येन तदुक्ता दोषाः प्रादुःष्युः। किंच विवर्तवादो हि तन्मतस्य जीवातुरन्यैश्च तस्मादेव भिक्षितः। कथमन्यथा विज्ञान-

[1] *Śāradātilaka*, page 19, Tantric, Texts Vol. 16. part I.
[2] *Tattvasaṃgraha*, p. 67. Vol. I, Gaekwad's Oriental Series, 30.

मात्रास्तित्ववादी स सांवृतसत्यस्य प्रपञ्चस्य प्रतिभासं समर्थयिष्यति । अतो जानतापि तत्तत्त्वमजानतेव वैयाकरणानामुपरि कथ्यमानो दोषो न सर्वथा तान् लगतीति सुधियोऽत्र प्रमाणम् ।

सैषा परा वाक् नाभिपर्यन्तमागच्छता तेनैव वायुना नाभिदेशेऽभिव्यक्तिं प्रापिता पश्यन्तीत्युच्यते । एतद् द्वयमपि सूक्ष्मतमसूक्ष्मतररूपमीश्वराधिदैवतं योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषयं चोच्यते । ततो हृदयपर्यन्तमागच्छता तेनैव वायुना हृदयदेशेऽभिव्यक्ता तत्तदर्थविशेषतत्तच्छब्दविशेषावगाहिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा मध्यमा वागित्युच्यते । स्वयं तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन सूक्ष्मं श्रूयमाणा भवति । अस्या एव नादरूपोंऽश आन्तरः स्फोट इति कथ्यते । सैवास्यपर्यन्तं गच्छता तेनैव वायुना व्यानोदानसंज्ञकेन कण्ठदेशं गत्वा मूर्धानमाहत्य प्रतिनिवृत्य तत्तत्स्थानेष्वभिव्यञ्जिता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या वैखरीत्युच्यते । अयं च स्फोटाख्यः शब्दस्तत्तत्प्राणिहृदयदेशावच्छिन्नाकाशदेशस्थः सर्वसमष्टिविराजो हृदयरूपबाह्याकाशदेशस्थः कण्ठादिस्थानस्थवागिन्द्रियजन्योच्चारणविषयश्च । यथोक्तम् —

[1]"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥"

इति । तथा—[2]"वर्णोच्चारणकारणमिन्द्रियं वाक् । तच्च हृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्धरूपस्थानाष्टकवृत्ति । शुकादिव्यतिरिक्तविहङ्गा-

[1] *Pāṇiniyas'ikṣā*, verse 13.
[2] *Nyāyasiddhāñjana*, page 42 *S'rī-Vaiṣṇavasiddāntagranthamālā*, No. 1.

दीनां तत्तददृष्टसंस्थानादिसहकारिविरहात् वर्णोच्चारणाशक्तिः । शुकादीनामपि किंचित् तद्वैषम्यादुच्चारणवैषम्यम्" इति । यत्तु—

[1] "आदौ तावदिन्द्रियत्वे स्थिता वाक्कर्मसंज्ञिते ।
तस्यात्मता ब्रह्मता वा वक्तुं शक्या न साधुभिः ॥
इन्द्रियत्वेऽपि सामान्ये पाण्यादेर्ब्रह्मता न किम् ।
तत्र चेत्सूक्ष्मकलना सर्वत्र कलनाग्रतः ॥"

इति वाचो वाक्पाण्यादिकर्मेन्द्रियेष्वन्यतमत्वेन कथं ब्रह्मत्वमिति चोद्यम्, तदित्थं प्रतिविधेयम् । तथाहि—अहो! महतामपि प्रमादः । वाक्शब्दो हि वागिन्द्रिय इव तज्जनितोच्चारणविषये शब्देऽपि प्रयुज्यते । तथा हि—[2]"वाचा विरूप नित्यया" [3]"यतो वाचो निवर्तन्ते" [4]"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा" [5]"वाचा धर्ममवाप्नुहि" इत्यादिषु शब्द एव ह्यर्थः । तथाच कण्ठादिस्थवागिन्द्रियजन्योच्चारणविषयशब्दतत्त्वस्यैव हि ब्रह्मतोच्यते स्फोटवादिभिः, न तु वागिन्द्रियस्येति न किंचिदेतत् ।

स चायं स्फोट एक एव, लाघवात् । तथा विभुर्नित्यश्च । तत्र च कत्वादिविशेषा न सन्त्येव । कत्वादिप्रतीतिस्तु व्यञ्जकभूतैर्वर्णैर्ध्वनिभिर्वा कृता । कत्वादिविशिष्टतयैव [6]"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः" इत्युच्यते । तत्र श्रोत्रोपलब्धित्वं कत्वादि-

[1] *S'ivadṛṣṭi*, verses 12 and 13.
[2] *Taittiriyasaṁhitā*, 2. 6. 11. 2.
[3] *Taittiriya-Upaniṣad*, 1. 2. 4.
[4] *Smṛti.*
[5] *Rāmāyaṇa*, 5. 39. 10.
[6] *Mahābhāṣya*, 1. 1. 69.

नाभिव्यक्तत्वम् । बुद्धिनिर्ग्राह्यत्वं पदादिरूपेण । प्रयोगेण वैखरीरूपेणाभिज्वलितत्वं तत्स्वरूपरूषितत्वम् ।

एवं च मध्यमाया नादांश एवान्तरः स्फोटः । स च मनोमात्रगोचरः, कचटतपादिवर्णप्रतिभासरहितः । तस्यैव च मुख्यं वाचकत्वम् । स च प्रणवरूपः । वैखरी तु बाह्यः स्फोटः श्रोत्रेन्द्रियग्राह्यः कचटतपादिवर्णप्रतिभाससहितः । अयमपि प्रणवविवर्त इति वेदितव्यम् ।

स चायं शब्दसृष्टिक्रमोऽधोनिर्दिष्टक्रमेण वेदितव्यः—

१. ईश्वरः[1] —प्राणिकर्मवशात् सिसृक्षात्मकशक्तियुक्तं ब्रह्मैवेश्वर इत्युच्यते । एष घनीभूतचिद्रूपः ।

२. माया[2] —कारणबिन्दुः, त्रिगुणात्मिका, अविभागावस्था, चिद्रूपा, मायाशबलितं ब्रह्म ।

३. बिन्दुः[3] — एतदंशाः—
(a) चिदंशः-कार्यबिन्दुः, ईश्वरकार्यतत्त्वम् ।
(b) अचिदंशः-बीजमिति अविद्येति च कथ्यते ।
(c) चिदचिदंशः-नादः ।

[1] *Vide* "सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः संनिधेस्तदा । वि चिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ॥" प्रपञ्चसारः, 1—41.

[2] *Vide* "अभिव्यक्ता परा शक्तिरविनाभावलक्षणा । अखण्डपरचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः ॥" शारदातिलकव्याख्या, Page 16, Tantric Texts, Vol. 16, part I.

"स एव जगदङ्कुरकन्दरूपत्वात् कारणबिन्दुरिति व्यवह्रियते" । सौभाग्यभास्करः, Stanza 132.

[3] (*a*) अस्माच्च कारणबिन्दोः सकाशात् क्रमेण कार्यबिन्दुः, नादः, बीजमिति त्रयमुत्पन्नम्" । सौभाग्यभास्करः, Stanza 132.

४. परा[1] or नादः — रवः, शब्दब्रह्म, वर्णादिविशेषरहिता, चेतनमिश्रा, सृष्ट्युपयोगिनी, जगदुपादानभूता। पूर्वोक्तनाद एव कुण्डलिनीरूपेण प्राणिनां मूलाधारे वर्तते। कुण्डलिन्याः प्राणवायुसंयोगे परा व्यज्यते। इयं निःष्पन्दा। पश्यन्त्यादयः सस्पन्दा अस्या विवर्तः। इयं शब्दार्थसंस्काररूपाविद्यामिश्रा चेतना च। अस्या एव शब्दसृष्टिरिवार्थसृष्टिश्च। इयमेव सूक्ष्मस्फोट इत्युच्यते।

५. पश्यन्ती—स्वाधिष्ठाने नाभौ पवनसंयोगात् पराया विवर्तः पश्यन्ती। इयमपि चेतना सस्पन्दा सूक्ष्मस्फोट इत्युच्यते।

६. मध्यमा—अनाहते हृदये पवनसंयोगात् पश्यन्त्या विवर्तः। परापश्यन्तीमध्यमादिकं सर्वमपि चिदचिद्भागमिश्ररूपम्। अत एवास्या योऽयं नादरूपोंऽशः स आन्तरः स्फोट इत्युक्तम्। इयं सस्पन्दा।

1 "कारणबिन्दुर्यदा कार्यबिन्द्वादित्रयजननोन्मुखी भिद्यते, तद्दशायामव्यक्तः शब्दब्रह्माभिधेयो रवस्तत्रोत्पद्यते। तदिदं शब्दब्रह्म स्वप्रतिष्ठतया निःष्पदम्। तदेव च परा वागित्युच्यते"। सौभाग्यभास्करः, Stanza 132.

"इयं चेतनैव। अत एव शारदादावित एव सर्वसृष्टिरुक्ता। एवं चैतद्विवर्तभूतं पश्यन्त्याद्यपि चेतनमेव"। *Vide Kalā*, page 178, Chow. Sans. Series. 46.

"तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्"। *Vide Sāradātilaka*, 1—14.

ननु पश्यन्त्यादिविवर्तसंभवेऽपि तेन रूपेण कथं विवर्त इत्याशङ्क्य "शब्दार्थोभयसंस्काररूपाविद्यामिश्रितत्वेनाविरोधः" इति कलायामुक्तम्। Page 177. Chow. Sans. Series, 46.

*N. B.* मान्त्रिकास्तु बिन्दोरेव शब्दार्थसृष्टिमाचक्षते।

७. **वैखरी**—विशुद्धे कण्ठदेशे पवनसंयोगात् मध्यमाया विवर्तः। एषा सस्पन्दा श्रोत्रग्रहणयोग्या च। वर्णाभिव्यङ्ग्यो बाह्यस्फोटः।

अयं च स्फोटो द्विधा—व्यक्तिस्फोटो जातिस्फोटश्चेति। तत्र व्यक्तिस्फोटः सखण्डाखण्डभेदेन पुनर्द्विधा। तत्र सखण्डस्फोटो वर्णपदवाक्यभेदेन त्रिधा। अखण्डस्फोटोऽपि पदवाक्यभेदेन द्विधा। एवं च पञ्च व्यक्तिस्फोटाः। जातिस्फोटोऽपि वर्णपदवाक्यभेदेन त्रिधा। आहत्येत्थमष्टौ स्फोटाः—सखण्डवर्णस्फोटः, सखण्डपदस्फोटः, सखण्डवाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटश्चेति। तत्राखण्डवाक्यस्फोट एव मुख्य इति नव्याः। यदाह—"[1]तत्र वाक्यस्फोट एव मुख्यः" इति। अत्र वाक्यस्फोटपदेनाखण्डवाक्यस्फोटो गृह्यते। वाक्यजातिस्फोट इति तु प्राञ्चः। यदाहुः—[2]"यद्यपीहाष्टौ पक्षा उक्ताः, तथापि वाक्यस्फोटपक्षे तात्पर्यं ग्रन्थकृताम्। तत्रापि जातिस्फोट इत्यवधेयम्" इति।

तत्र वर्णस्फोट इत्यत्र वर्णपदं न परेषामिव प्रत्येकवर्णपरम्, तेषां वाचकत्वस्य सर्वथा निरस्तत्वेन तदभ्युपगमेऽपसिद्धान्तापातात्। किंतु प्रकृतिप्रत्ययपरम्। तथाच वर्णस्फोट इत्यस्य प्रकृतिप्रत्ययौ वाचकाविस्यर्थः। शास्त्रप्रक्रियानिर्वाहार्थं तयोरर्थः कल्पितः। अयं च पक्षः—[3]"दाधा घ्वदाप्" सूत्रभाष्ये उक्तः। तथाहि—[4]"आदेशास्तर्हीमे भविष्यन्ति। अनागमकानां सागमका आदेशाः। तत्कथम्—

[1] *Laghumañjūṣā.* page 1. Chow. Sans. Series, 46.

[2] *S'abdakaustubha*, page 11. Chow. Sans. Series, 2.

[3] *Aṣṭādhyāyī*, 1. 1. 20.

[4] *Mahābhāṣya*, 1. 1. 20.

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥ "

इति । तत्र कैयटः—[1]"सर्वे इति; आगमा अपीत्यर्थः । सर्वपदादेशा इति; पदशब्देन न सुबन्तं गृह्यते; अपि तु कार्यं प्रतिपद्यमानं प्रकृतिप्रत्ययादि" इति । एवं सति 'रामेण, रामेषु' इत्यादौ प्रकृतिप्रत्ययविवेकस्य दुरधिगमतया तयोर्वाचकत्वं दुर्वचमिति विशिष्टस्यैव पदस्य वाचकत्वमिति पदस्फोटः । अत्र पदं सुप्तिङन्तम् । एवं 'हरेऽव, विष्णोऽव' इत्यादौ पदविभागस्य दुरधिगमतया पदस्फोटपक्षो न संभवतीति विशिष्टं वाक्यमेव वाचकमिति वाक्यस्फोटः । एतत्पक्षद्वयमपि महाभाष्यकारैरप्यभिसंहितम् । यथा—[2]"अथ गौरित्यत्र कः शब्दः" इत्युपक्षिप्य व्यक्तिक्रियादीनां शब्दत्वं निराकृत्य "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः" इति प्रतिपादितम् । अत्र कैयटः—[3]"वैयाकरणा वर्णातिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति" इति व्याचख्यौ । तत्र येनोच्चारितेनेत्येकवचनेन गौरित्यस्यैकपदत्वं सूचितम् । अत्रैव—'वर्णातिरिक्तस्य पदस्य वाक्यस्य वा' इति ब्रुवता अखण्डपदवाक्यस्फोटौ प्रतिपादितौ । तथा "[4]पदप्रकृतिः संहिता" इति प्रातिशाख्यमप्यत्र मानम् । तत्र हि पदानां प्रकृतिरिति षष्ठीतत्पुरुषे अखण्डवाक्यस्फोटपक्षः । पदानि प्रकृतिर्यस्या इति षष्ठीबहुव्रीहौ सखण्डवाक्यस्फोट इति विभावनीयम् । यदाह हरिः ।

[1] *Pradīpa*, 1-1-20.
[2] *Mahābhāṣya, Paspas'āhnika.*
[3] *Pradīpa Paspas'āhnika.*
[4] *Ṛgvedaprātis'ākhya*, 2. 1. Cf. also *Niruktavyākhya* by Durgācārya, 1-17.

"[1] पदप्रकृतिभावश्च वृत्तिभेदेन वर्ण्यते ।
पदानां संहिता योनिः संहिता वा पदाश्रया ॥"

इति । अनन्तानां वर्णानां पदानां वाक्यानां च वाचकत्वकल्पनापेक्षया तन्निष्ठाया जातेरेव वाचकत्वकल्पने लाघवमिति जातिस्फोटपक्षः । यथा अनन्तासु गोव्यक्तिषु शक्तिकल्पनापेक्षया लाघवेन गोपदस्य गोत्वे शक्तिकल्पनमाकृत्यधिकरण इति प्राञ्चः । यदाहुः—[2]"शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्" इति ।

ननु स्फोटवादिनां मते स्फोटस्य वर्णरहितत्वात् गकारौकारविसर्जनीयरूपो गौरिति पदमेव नास्ति ; कुतस्तन्निष्ठा जातिः ? कुतस्तरां तस्या वाचकत्वम् ? -अथ वर्णानां स्फोटव्यञ्जकतया तद्धर्मप्रतिभासः स्फोट उपपद्यते, मणिकृपाणादर्शधर्मा इव मुख इत्युच्यते ; नैतदेवम् । व्यञ्जका हि वर्णा आशु विनाशिनः । न द्वितीयादिवर्णोत्पत्तिक्षणे पूर्वे स्वयमवतिष्ठन्त इति गकारौकारविसर्जनीयानां संभूयावस्थानमेव नेति तद्व्यङ्ग्ये स्फोटे कथं तेषां युगपत्प्रतिभासः स्यात् ? तदुच्यते—"[3]अनारब्धे तु गोशब्दे गोशब्दत्वं कथं भवेत्" इति । किं च स्फोटस्यैकत्वात् गौरिति पदस्फोट एक एवेति कथं तत्र जातिः सिध्येत्, आश्रयैकत्वस्य जातिबाधकत्वादिति चेत् ; अत्र वदन्ति—व्यञ्जकानां वर्णानां संभूयावस्थानासंभवेऽपि पूर्वपूर्ववर्णजनितसंस्कारसचिवोऽन्त्यो वर्णो वाचक इति परेषां मत इव तादृशोऽन्त्यवर्णोऽस्माकं मते स्फोटव्यञ्जको भविष्यतीति न वयमत्र पर्यनुयोगार्हाः ।

[4]"यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तदर्थस्य विचारणे ॥"

[1] *Vākyapadīya* 2-59.
[2] *Vaiyākaraṇabhūṣaṇa* verse 71.
[3] *Ślokavārtika* p. 526, verse 66, Chow. Sans. Series, 3.
[4] *Sāṁkhyasūtrāniruddhavṛtti*, 1-6.

इति हि न्यायविदः । अथवा वर्णानां नश्वरत्वेनानुभवे यौगपद्यासंभवेऽपि स्मरणे यौगपद्यमापन्नानां तेषां व्यञ्जकत्वं भविष्यति । यदाह हेलाराजः—"[1]अनुभवपूर्वकत्वं हि स्मरणस्य नियतम्; न तु क्रमेणोपलब्धं युगपन्न स्मर्यते, शतादिप्रत्ययाभावप्रसङ्गात्" इति । यत्त्वेकव्यक्तिवृत्तित्वात् गोशब्दत्वं न जातिरिति । सत्यमेतत् परमार्थतः । प्रतिपुरुषकण्ठताल्वादि-व्यञ्जकभेदभिन्नवर्णनिबन्धना तु गौरिति पदस्फोटेऽनेकत्वप्रतीतिर्दुर्वारा । अतो गोशब्दत्वजातिकल्पने न किमपि दौःस्थ्यम् । सा च जातिर्महा-सत्तारूपा ब्रह्मणो न भिद्यत इति सर्वत्र ब्रह्मण एव वाचकत्वम्, वाच्यत्वं च । तस्या एव च महासत्ताया गोत्वाश्वत्वादिर्विशेषसत्ता विवर्त इति तस्या आविद्यकं वाचकत्वं वाच्यत्वं चेति जातिस्फोटवादस्य निष्कर्षः । तदाह—

> [2]संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।
> जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
> सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ।"

इति । कैयटोऽपि—"[3]तत्तदाकारं तत्तद्व्यङ्ग्यजातिरूपं वा असत्यमुपाधि-माश्रित्य तत्तदवच्छिन्नं ब्रह्मैव द्रव्यम्" इत्याह ।

नव्यास्तु तमिमं जातिस्फोटं नेच्छन्ति । तथाहि वर्णानामानन्त्या-दुत्पादविनाशशालित्वाच्च तत्समूहे पदे वाक्ये च शक्तिग्रहासंभवेन ह्यनु-भवविसंवादिन्यपि जातिशक्तिः कल्प्यते । तत्तु वृथा । ब्रह्मण एकस्यैव परमार्थसत्त्वेन तद्भिन्नानां पदवाक्यरूपाणां शब्दव्यक्तीनामाविद्यकत्वात् तन्निष्ठाया जातेरप्याविद्यकत्वाविशेषादनित्यत्वं तुल्यम् । अत एव "अग्ने-रग्नित्वमपागात्" इति श्रुतावग्नित्वस्य नाश उक्तः । तथा च तत्तदुपा-

[1] *Vākyapadīyavyākhyā*, *Kālasamuddeśa*, verse 89.
[2] *Vākyapadīya*, *Jātisamuddeśa* verse 33 and 34.
[3] Cf. *Pradīpa Paspaśāhnika*.

ध्यवच्छिन्न: स्फोट एव व्यक्तिपदेनोच्यते। तत्तदुपाध्युपलक्षितो जाति-पदेनोच्यत इत्यङ्गीकरणीयम्। परं तु जात्यङ्गीकारे सा पदार्थान्तरम्। उपाध्यङ्गीकारे तु नेति तत्तदुपाध्यवच्छिन्नव्यक्तावेव शक्तत्वकल्पने लाघव-मिति न जातिस्फोटोऽङ्गीकरणीय इति वदन्ति। अत्रेदमवधेयम्—स्फोटो-ऽयमनवयव: स्वयंप्रकाशब्रह्मतत्त्वात्मक इति हि वैयाकरणानां सिद्धान्त:। एवं सति तस्मिन् वर्णधर्माणामध्यास: पूर्वोक्त: कथं संगच्छताम्? सावयवे परप्रकाश्ये च वस्तुनि कस्मिंश्चिदंशेऽज्ञाते यथावदप्रकाशमाने वा परधर्मा-ध्यासो युज्यते, न निरवयवे स्वयंप्रकाशे वेति चेत्; अत्र ब्रूम:—तादृशेऽपि ब्रह्मणि प्रपञ्चाध्यासो यथेति। ननु सोऽपि वा कथमुपपद्यतामिति चेत्, अत्र बहुधा पराक्रान्तं सूरिभिरिति नायमवसरस्तद्विचारस्य।

ग्रन्थस्यास्य रचयिता नागेशभट्ट उपाध्यायोपनामक: सतीदेवी-शिवभट्टयोस्तनयो हरिदीक्षितस्य शिष्य: प्रयागप्रान्तस्थशृङ्गबेरधराधिपस्य रामवर्मनृपते: सदस्यश्चासीत्। अस्य समयस्तु क्रिस्तु-सप्तदशशतक-स्यान्तिमभागमारभ्याष्टादशशतकस्यादिमभागपरिमित इत्यधोनिर्दिष्टैर्हेतुभि-रूहितुं शक्यते। अस्य गुरोर्हरिदीक्षितस्य जनको भानुजिदीक्षित:। तस्य कश्चन शिष्य आसीत् वत्सराजो नाम। स स्वकीयवाराणसी-दर्पणाख्यग्रन्थनिर्माणकालं सं-१६९८=क्रिस्तु १६४१ इति निर्दिशति। हरिदीक्षितस्य समयोऽपि प्रायेणैष एव भवितुमर्हति। तत: परं किंचिद्न्यू-नाधिकमर्धशतं वत्सरान् व्यतीत्य क्रिस्तु १६९१ तम: संवत्सरस्तच्छिष्यस्य नागेशस्य समयो भवितुमर्हतीत्यूह्यते। अयं चोह ऐतिहासिकानां वचने-नापि दृढीक्रियते। तथाहि—अयं नागेश: क्रिस्तु १७१४ तमे संवत्सरे जयपुराधिपेन जयसिंहेनाश्वमेधयागायाहूत: परं तु तदाह्वानं नाङ्गी-

चकारेति चैतिहासिकमुखात् श्रूयते। तथा अयं क्रिस्तु १७७५ तमे वर्षे अतीव स्थविरो वाराणस्यां देवभूयमापेद इति चैतिहासिकाः कथयन्ति।

एतत्प्रणीताः प्रधानतमा ग्रन्थाः—

(१) महाभाष्यप्रदीपोद्द्योतः, (२) मञ्जूषा, (३) लघुमञ्जूषा, (४) परमलघुमञ्जूषा, (५) शब्देन्दुशेखरः, (६) लघुशब्देन्दुशेखरः, (७) परिभाषेन्दुशेखरः, (८) स्फोटवादः (प्रकृतः), (९) काव्यप्रकाशव्याख्या, (१०) रसगङ्गाधरव्याख्या, (११) देवीमाहात्म्यव्याख्या, (१२) पातञ्जलयोगसूत्रवृत्तिः। अन्ये च केचन स्मृतिग्रन्था एतत्प्रणीता इति प्रसिद्धाः।

स चायं स्फोटवादो बहुभिः पतञ्जलिहरिप्रभृतिभिर्वैयाकरणैः स्वग्रन्थेषु प्रसङ्गान्निरूपितः। तावताप्यतृप्यन्निव नागेशः स्फोटवादाख्यं ग्रन्थमिमं जग्रन्थ। पुनरप्ययं मञ्जूषायां विस्तरेण वर्णितश्च। अत्र च वर्णस्फोटपदस्फोटादयोऽष्टौ स्फोटास्तेषां स्वरूपं शक्तेः स्वरूपमित्यादिकं परमतनिराकरणपूर्वं वैयाकरणमतरीत्या सुविशदं निरूपितम्। ग्रन्थान्तरेष्वविचारिता बहवो विषया नूत्नतयात्र विमर्शपदमानाय्य सिद्धान्तिताः। ते च विषया अदसीयविषयानुक्रमण्यां प्रदर्शितायामिदंतया निर्दिष्टा इति न पुनरत्र पिष्टमेव पिंष्मः। यद्यप्यधोनिर्दिष्टा ग्रन्थाः स्फोटनिरूपणैदंपर्येण प्रवृत्ताः। यथा—(१) मीमांसकवेदान्त्येकदेशी मण्डनमिश्रः प्रायशो भाट्टं मतमनुसरन्नपि शब्दविषये परं वर्णानामर्थप्रत्यायकत्वं तदभिमतमनुपपन्नं मन्वानो वैयाकरणानां पद्धतिमनुरुध्य वर्णातिरिक्तस्य स्फोटस्यैव वाचकत्वमास्थित। भट्टपादैस्तदनुसारिभिश्चान्यैर्निराकृतं स्फोटवादं पुनरुद्धर्तुकामः स्फोटसिद्धिं नाम ग्रन्थमेकं षट्त्रिंशता पद्यैरग्रथ्नात्। तत्र—

[1]" दुर्विदग्धैरवक्षिप्ते दर्शने पददर्शिनाम् ।
यथागमं यथाप्रज्ञं न्यायलेशो निदर्श्यते ॥ "

इत्युपक्रम्य सविस्तरं स्फोटसिद्धिं प्रसाध्य, अन्ते--

[2]" निरस्तभेदं पदतत्त्वमेतद् व्यादर्शि युक्त्यागमसंश्रयेण ।
विधूतभेदग्रहमेतयैव दिशा परं संप्रतियन्त्वभेदम् ॥ "

इत्युपसंजहार । तत्र श्लोकवार्तिकोक्ताः स्फोटवादनिरासयुक्तयः सुनिपुणं निरस्ताः । तत्प्रकारश्च तत एवावगन्तव्यः । (२) तथान्या स्फोटसिद्धिः भरतमिश्रकृता, (३) स्फोटतत्त्वनिरूपणम्, शेषकृष्णसुधीकृतम्, (४) स्फोटवादः नागेशकृतः, (५) स्फोटचन्द्रिका मौनिश्रीकृष्णभट्टकृता, (६) स्फोटसिद्धिः अज्ञातकर्तृका, (७) स्फोटनिरूपणम् आपदेवकृतम्, (८) स्फोटसिद्धिन्यायविचारश्चेति । तथापि नागेशकृतः स्फोटवादो विषयगौरवेण विचारबाहुल्येन नव्यविमर्शनरीत्या च सर्वानपीतरान् ग्रन्थानतिशेत इति सुस्पष्टं तत्परिशीलिनाम् । स चायं ग्रन्थ एतावता कालेन कुत्रापि गह्वरे निलीनो विदुषां बहूनामसुलभश्चावर्ततेति विधिमन्तरा कोऽत्र गर्हणीयः । परं तु वाराणसीतो निधिमिव वैयाकरणानां नव्यं मतमाहृत्य प्रतिनिवृत्ता दक्षिणदेशे प्रथमतस्तन्मतप्रवर्तकाः कीर्तिशेषा अस्मद्गुरवो महामहोपाध्यायाः श्रीमन्तः सुब्बरायाचार्याः मञ्जूषापाठनावसरे मामेतद्ग्रन्थनामनिर्देशपूर्वमत्रत्यान् बहून् विषयानबोधयन्निति प्रत्येमि न सुतरामज्ञातोऽयं ग्रन्थो विश्रुतपाण्डित्यानां विदुषामिति । किंतु तेषामप्यस्मद्गुरुचरणानामयं ग्रन्थः संपूर्णो हस्तप्राप्यो नाभूदिति तन्मुखादेव मया श्रुतम् । अत एवात्र विधिरेव विशेषगर्हणीयः ।

[1] *Sphoṭasiddhi* verse 2.
[2] *Sphoṭasiddhi* verse 36.

यदा चाहं मद्रपुरीराजकीयकलाशालायामध्यापकपदादात्यन्तिकं विरामं परिगृह्य अडयार्-पुस्तकालये प्राचीनग्रन्थविमर्शनाय पुनरप्युद्यममङ्ग्यकार्षं, तदा तत्रत्यग्रन्थानां शोधनावसरे स्फोटवादस्यास्यान्ध्रलिपिमयी मातृकैका मम दृष्टिपथमाययौ। यस्मिन् दिनेऽहं निधिमिवैनं कोशमद्राक्षं तस्मिन्नेव दिने ममैतस्य मुद्रणे प्रकाशने च महती श्रद्धा त्वरा च युगपदुदियाय। परं तु कोशान्तरसाहायकमन्तरा मुद्रणं प्रमादस्खालित्यावहमिति बिभ्यत् किंचिदिव विरतोद्यमोऽभवम्। दिष्ट्या त्वनतिचिरादेव मद्रपुरीराजकीयपुस्तकालये ग्रन्थोऽयं सुलभ इति विज्ञाय अडयार्-पुस्तकालयाध्यक्षद्वारा तत्पुत्रिकामेकां समवापम्। एतत्पुस्तकद्वयसाहायकेनैवैतन्मुद्रणमधुना निर्वर्तितम्।

प्रथमतोऽस्य ग्रन्थस्य शोधनादौ बहूपकृतवतः पण्डितरामचन्द्रशर्मणः सोत्साहं साहायकं विशेषतो निर्देशमर्हति। वयसा कनीयसोऽप्यस्य ज्ञानेन ज्यायस्त्वं बहुमानार्हम्।

ग्रन्थस्यास्य मुद्रणे प्रकाशने च अडयार्-पुस्तकालयोदन्तपत्रिकायाम् (*Adyar Library Bulletin*) अवकाशं प्रदायोत्साहं मदीयं सफलीकृतवतां विद्यानिपुण-सि. कुन्हन्राजमहाशयानाम्, एतत्पुस्तकालयाध्यक्षाणां श्रीमतां श्रीनिवासमूर्तिमहाशयानां च कृते निरतिशयां कृतज्ञतां धारयामः।

अन्ततो मुद्रणमेतत् सहृदयहृदयावर्जकं रमणीयं च निर्वर्तितवद्भ्यो वसन्तमुद्रणालयाधिकृतेभ्यो बहून् धन्यवादानाशास्महे।

वे. कृष्णमाचार्यः

श्रीः

# स्फोटवादः

## नागेशभट्टविरचितः

१. ननु कः स्फोटो नामेति चेत्; शृणु—(१) वर्णस्फोटः, (२) पदस्फोटः, (३) वाक्यस्फोटः, (५) अखण्डपदवाक्यस्फोटः, (६-८) वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इति वैयाकरणसिद्धान्तः।

---

श्रीः

## स्फोटवादव्याख्या सुबोधिनी

१. श्रीभर्तृहरिप्रभृतीनां वैयाकरणानां प्रतितन्त्रसिद्धान्तभूतमखण्डवाक्यस्फोटं निरूपयितुकामो महावैयाकरणो नागेशभट्टः प्रश्नरूपेण स्फोटवादमवतारयति--**ननु कः स्फोटो नामेति**। अनेन स्फोटावान्तरभेदतत्स्वरूपादीनां प्रश्नः क्रियते। तत्र स्फोटस्यावान्तरभेदेषु नामतो निर्दिष्टेषु तावतैव तत्स्वरूपमप्यूहापोहकुशलमतिभिः प्रायशो विज्ञातं भवेदिति प्रथमं तदवान्तरभेदानाह—**वर्णस्फोट** इत्यादिना। स्फोटपदं वाचकपरमित्यनुपदमेव व्याख्यास्यति ग्रन्थकारः। अत्र वर्णस्फोटपदस्फोटवाक्यस्फोटा वैयाकरणैकदेशिनां तान्त्रिकान्तराणां च केषांचित् साधारणाः। अखण्डपदवाक्यस्फोटौ जातिस्फोटश्चेति त्रयोऽपि वैयाकरणानां प्रतितन्त्रसिद्धान्तभूताः। तत्राप्यखण्डजातिस्फोट एव परमसिद्धान्त इत्यवगन्तव्यम्।

वर्णस्फोटः । भाट्टाः प्राभाकराश्च घट इत्यादौ श्रूयमाणानां घकारटकारादिवर्णानामेव समुदितानामर्थप्रत्यायकत्वमभ्युपगच्छन्ति । न चाशुतरविनाशिनां वर्णानां कथं समुदायप्रत्याशेति शङ्कनीयम्, तेषां नित्यत्वेनाशुतरविनाशित्वाभावात् । नित्यत्वेऽपि तेषां यदा कण्ठताल्वाद्यभिघातजन्यध्वनिविशेषैरभिव्यक्तिस्तदैवार्थप्रत्यायकत्वं नान्यदेति न सर्वदार्थप्रतीतिप्रसङ्गपर्यनुयोगस्यावकाशः । नन्वेवमपि ध्वनीनामाशुविनाशितया घकाराभिव्यञ्जको ध्वनिः टकाराभिव्यक्तिदशायां प्रनष्ट इति कथं तत्समभिव्याहार इति चेत्; अत्र वदन्ति—उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसंबन्धेनोपस्थितपूर्ववर्णवत्त्वम्; तथा तदुत्तरवर्णप्रत्यक्षकाले उपस्थितविशिष्टतद्वर्णवत्त्वं तस्मिन् सुग्रहमिति तादृशानुपूर्वीघटितसमुदायसंभवः । वर्णानां नित्यत्वेऽप्यभिव्यञ्जकध्वनिगतमव्यवहितोत्तरत्वमारोप्याव्यवहितोत्तरत्वव्यवहारः । वर्णानामनित्यत्वेऽपि पूर्वपूर्ववर्णजन्यसंस्कारसचिवान्त्यवर्णेनार्थप्रतीतिसंभवान्नतरां वर्णातिरिक्तः स्फोटो नाम कश्चिदस्ति । यदाह शबरः—"पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः" इति । "अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति च (शाबरभाष्यम् १-१-१) । भट्टपादा अपि—

"वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः ।
व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥" इति ।
"नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।"

(श्लोकवार्तिकम् स्फोटवादः; श्लो. १३१; १३३)

इति च । शास्त्रदीपिकाकारोऽपि—"तस्माद्व्यञ्जकध्वनीनां क्रमेण व्यङ्ग्येषु वर्णेषु समारोपितेन तद्धन्तः स्मर्यमाणा वर्णा वाचकाः; नान्यः शब्दोऽस्ति" इति (शास्त्रदीपिका १-१-६) । क्रमविशेषविशिष्टानामेव तेषामर्थविशेषावगमान्न सरो रसः, नदी दीन इत्यादावर्थप्रतीतिसंकरः ।

सांख्या वेदान्तिनश्चैवमाहुः—गकारादिवर्णानामेव समुदितानां वाचकत्वम्; 'एकं पदम्; एकं वाक्यम्' इति प्रत्ययश्च वर्णसमुदायविषयः । ननु "तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता" (विष्णुपु० १-१-४४)

इति शास्त्रवशादेकरूपं शब्दतन्मात्रमभ्युपगन्तव्यम्। तदेव वैयाकरणैः स्फोट इत्युच्यत इति चेत्; न, तन्मात्रावस्थापन्नानां सूक्ष्मभूतकारणगुणानामतीन्द्रियत्वेन श्रावणत्वायोगात्। स्फोटः श्रावणप्रत्यक्षविषय इति हि शाब्दिकानां सिद्धान्तः। किं च दध्यवस्थायां दुग्धावस्थेव स्थूलाकाशसृष्टेः पश्चात् सूक्ष्मभूतं शब्दतन्मात्रं नास्त्येवेति कथमद्य स्फोटोपलब्धिः सुवचा? तस्माद्गकारौकारविसर्जनीया एव श्रोत्रग्राह्याः समुदिता वाचकाश्चेति। यथोक्तम्—

"प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः" इति।

(सा० सू० ५-५७)

"न ह्यक्षैः कोऽपि वर्णाभ्यधिकमिह विदुर्वाचकं सावधानाः
शब्दादर्थं प्रतीमस्त्वित्वति च जनवचो नैकमन्यद्व्यनक्ति।
सामग्र्यैक्यादिनीत्या भवति मतिरियं तादृशे वर्णसंघे
संभेदे वा पदानामिति न तदधिकः कोऽपि शब्दोऽपरोक्षः॥८७॥
यादृग्भिः स्फोटधीस्ते तदपि भवतु तैरर्थधीरेव वर्णै-
र्वर्णेषूक्तो विकल्पः समगतिरुभयोर्यौगपद्यक्रमादिः।
वाक्यस्फोटेऽपि तुल्यं तदिदमिह पदैरक्षरैर्वावगम्ये
स्फोटे तद्बुद्धिबोध्ये सति न च घटते तत्तदध्यासक्लृप्तिः॥८८॥
शब्दो ब्रह्मेति यत्तन्मुनिभिरभिदधे स ह्यचिद्भेद इष्टः
सूक्ष्माकारस्तु सोऽर्थं न गमयति यतः सत्तया नैष हेतुः।
स्फोटस्त्वं वर्णजुष्टस्त्वित्वति यदभिहितं भारते सापि शक्ति-
र्वर्णानां स्यात्तयार्थः स्फुट इति घटते स्फोटशब्दोऽपि तस्याम्॥८९॥

(तत्त्वमुक्ताकलापः, सरः ४. श्लो. ८७-८९)

वैयाकरणैकदेशिनस्तु—वर्णस्फोट इत्यत्र वर्णपदेन प्रकृतिप्रत्ययभागावुच्येते। भवतीत्यादौ धातुना क्रियायास्तिङा कर्तुश्च प्रतीतिः। "भूवादयो धातवः" (पा. १ ३-१) इति प्रकृतिभागस्य क्रियावाचकत्वम् "लः कर्मणि" (पा. ३-४-६९) इत्यादौ च प्रत्ययानां कर्त्रादिवाचकत्वमनुशिष्टमिति प्रामाणिकोऽयं

पन्थाः । अस्य च प्रकृतिप्रत्ययभागस्य भव-ति इत्याकारको ध्वनिविशेषोऽभिव्यञ्जकः । अभिव्यज्यमानः शब्द एव वर्णविलक्षणः स्फोट इत्युच्यते । तत्र भूधातुः, ततः शप्, गुणः, अवादेशः, लकारः, तस्य तिप् आदेश इत्यादिकं सर्वं काल्पनिकम्; न वस्तु सत्; अनुशासनलाघवायैतावती परिकल्पनेत्याहुः ।

नैयायिकास्तु—वर्णानां प्रत्येकमर्थवत्त्वासंभवादाशुतरविनाशिनां तेषां समुदायासंभवाच्च वर्णस्फोटं नाभ्युपगच्छन्ति । न च वर्णानामाशुतरविनाशित्वेऽपि पूर्वपूर्ववर्णजन्यसंस्कारसाचिव्यात् अन्त्यवर्णेनार्थबोधोपपत्तिः; यतः संस्कारोऽपि तदेव कार्यं जनयेत्, यदनुभवे जनयितुं प्रभवेत् । न हि सेकाय प्रवृत्तिमनुपजनयन्नपि वह्न्यनुभवः संस्कारदशारोहमात्रेण तां जनयितुमीष्टे । तस्माद्वर्णानां वाचकत्वं सर्वथा न संभवतीति मन्वते । विस्तरस्तु **न्यायमञ्जर्यां** द्रष्टव्यः ।

**परस्फोटवाक्यस्फोटौ** भाट्टप्राभाकरसांख्यवेदान्तिभिर्वर्णानामेव समुदितानां वाचकत्वं तैरेव पदत्वव्यवहारश्चेत्यभ्युपगमात् तेषां मते पदस्फोटो नाम न कश्चिदस्ति । परं त्वौपनिषदमतप्रतिष्ठापकेष्वन्यतमोऽपि मण्डनमिश्रो भर्तृहर्यादिप्रवर्तितशब्दाद्वैतवादवासनारूषितान्तःकरणो वर्णापेक्षया अतिरिक्तं पदं वाक्यं चाङ्गीकृत्य पदस्फोटं वाक्यस्फोटं चास्थित । स्फोटसिद्धौ—एकं पदम्, एकं वाक्यमित्यबाधितप्रतीतिबलाद्वर्णेभ्योऽन्यत् पदं वाक्यं चावश्यमङ्गीकरणीयमिति सप्रपञ्चं प्रसाध्य, अन्ते एवमुपसंहृतम्—

"निरस्तभेदं पदतत्त्वमेतद् व्यादर्शि युक्त्यागमसंश्रयेण ।
विधूतभेदग्रहमेतयैव दिशा परं संप्रतियन्त्वभेदम् ॥" इति ।

(स्फोटसिद्धिः श्लो० ३६)

नैयायिकास्तु—'शक्तं पदम्, इत्यभ्युपगम्य प्रकृतिप्रत्ययोः पृथग्वाचकत्वमिति वदन्तः पदस्फोटमङ्गीकुर्वन्ति । परं तु पदं नाम न शाब्दिकानामिव ध्वनिवर्णातिरिक्तो नित्यः कश्चन पदार्थः । किं तु वर्णसमूहरूपं वर्णात्मकं तदिति ब्रुवते ।

वैयाकरणमतं तु ग्रन्थ एवाग्रे स्पष्टीभविष्यतीति नेह प्रतन्यते ।

२. तत्र स्फुटत्यर्थोऽस्मादिति स्फोटः; वाचक इति यावत्। एवं च वर्णस्फोटादिपदानां वर्णादयो वाचका इत्यर्थः। तत्र 'रामो भवति' इत्यादौ तत्तदानुपूर्व्यवच्छिन्नवर्णसमुदायरूपाः प्रकृतिप्रत्ययभागाः प्रयुज्यमानपदवाक्यादौ श्रूयमाणा वाचकाः; न तु तैः स्मृता आदेशेन इति वर्णस्फोटपक्षः। 'सरः, रसः' इत्यादावविशेषवारणाय तत्तदानुपूर्व्यवच्छिन्नेति। प्रयुज्यमानपदानन्तर्गता वर्णा वाचका न वेति विप्रतिपत्तिशरीरम्। अत्र विधिकोटिः परेषाम; निषेधकोटिरस्माकम्।

३. स्यादेतत्—प्रयोगसमवाय्यादेशभूततिबादीनां बहुत्वादनन्तशक्ततावच्छेदककल्पनापत्तेर्न वाचकत्वम्; किं तु तैः स्मृताः स्थानिभूता लादय एव वाचकाः। तत्र हि लत्वस्य जातिरूपस्यैकस्यैव शक्ततावच्छेदकत्वम्। न च 'भू ल' इत्यतोऽपि बोधः स्यादिति वाच्यम्, बोधे 'भव ति' इति समभिव्याहारस्य कारणतायाः 'भू ति' इत्यतो बोधापत्तिवारणाय तेषामप्यावश्यकत्वेन दोषाभावात्—इति चेन्न; लकारमविदुषां बोधानापत्तेः।

---

२. स्फोटपदार्थमाह—तत्रेति। 'स्फुट विकसने' इति तौदादिकाद्धातोः, "आकर्तरि च कारके संज्ञायाम्" (पा. ३-३-१९) इति घञिति भावः। **वर्णादयो वाचका इति**; वर्णरूपः स्फोट इति "विशेषणं विशेष्येण" (पा. २-१-५७) इति कर्मधारयसमास इति भावः। **आनुपूर्व्यवच्छिन्नेति**; आनुपूर्वीविशिष्टेत्यर्थः। **आदेशिनः**; स्थानिनो लादयः। **अविशेषवारणाय**; बोधे इत्यादिः। **प्रयुज्यमानेति**; प्रयुज्यमाने पदे 'भवति' इत्यादावनन्तर्गता लादय इत्यर्थः। **परेषाम्**; जरन्नैयायिकानाम्। **अस्माकम्**; वैयाकरणानाम्।

३. **तिबादीनाम्**; आदिपदेन 'तस्, अन्ति' इत्यादीनां ग्रहणम्। **लत्वस्य जातिरूपस्येति**; बहुत्रानुगताकारप्रतीतिविषयत्वं जातित्वे प्रमाणम्।

४. न च तिङ्क्ष्वेव शक्तिभ्रमात्ततो बोधः ; पदतदर्थाघटितशक्ति-भ्रमत्वस्योपपादयितुमशक्यत्वात् , भ्रमत्वे मानाभावाच्च । व्याकरणभेदेन कटूचडाभेदैः राम इत्यादौ सुसिबादिभेदैश्च स्थानिनामप्यनन्ततया अनन्त-शक्तताावच्छेदकल्पनापत्तेस्तदवस्थत्वाच्चैकत्रैव शक्तिः, विनिगमनाविरहात् । न च वेदाङ्गतया पाणिनीयव्याकरणोदितस्थानिनां वाचकत्वमिति वाच्यम् , अन्याध्ययनवतां बोधानापत्तेः । तेषां शक्त्यभावे लक्षणापि वक्तुमशक्या ।

५. यत्तु राम इत्यादौ सु सि इत्याद्यादेशिभेदात् येन सर्वव्याकरण-मधीतं तस्य विनिगमनाविरहेण बोधप्रतिबन्धः स्यादिति ; तन्न, लिपिवत् स्मारितानुगमस्यादोषत्वात् । यस्यैवोद्बोधकसामग्री तेनैव स्मृतेन बोध-संभवात् । यदि तु बहूनां सा तत्र सर्वैस्तैरित्यदोषात् ।

———

यथा बह्वीषु गोव्यक्तिष्वनुगताकारप्रतीतिविषयत्वात् गोत्वं जातिः ; तथा 'तिप् तस्' इत्यादौ 'लट्' इत्यनुगताकारप्रतीतिसत्त्वाल्लत्वं जातिः । **कारणतायाः** ; सहकारिकारणतायाः । **तेषामपि** ; आदेशानां वाचकत्वं ब्रुवतां वैयाकरणाना-मपि । **लकारमविदुषाम्** ; अवैयाकरणानां बालानाम् ।

४. **मानाभावादिति** ; उत्तरकाले बाधप्रतीतिर्यदि स्यात्तदा पूर्वोत्पन्नस्य ज्ञानस्य भ्रमत्वं कल्पयितुं शक्यम् । सा चात्र नास्तीति भावः । **वेदाङ्गतयेति** ; पाणिनीये वैदिकप्रक्रियायाः स्वरप्रक्रियायाश्चान्तर्भूतत्वात्तस्यैव वेदाङ्गत्वं न व्याक-रणान्तरस्येत्यभिमानः । **लक्षणापीति** ; शक्यसंबन्धरूपाया शक्यतावच्छेद-कारोपरूपाया वा लक्षणाया असंभवादित्यर्थः ।

५. शब्दकौस्तुभादौ भट्टोजिदीक्षितादिजरद्वैयाकरणैरुक्तं खण्डयति— **यत्त्विति** । **आदेशिभेदात्** ; स्थानिभेदात् ।

६. किंच शक्तिग्राहकशिरोमणिना व्यवहारेण श्रूयमाणेष्वेव शक्तिग्रहः । अपिच भूल इत्यादितो बोधवारणाय समभिव्याहारविशेषस्य कारणत्वावश्यकत्वे लाघवात् समभिव्याहारविषयवर्णेष्वेव शक्तिग्रहकल्पनोचिता ।

७. अपिच आदेशिनां स्मरणकल्पनायां यदस्माकं वाचकतावच्छेदकं तत्तव मते स्मारकतावच्छेदकं वाच्यम्, येन केनचिद्रूपेण स्मारकत्वेऽतिप्रसङ्गात् । तथाच तद्धेतोरिति न्यायेन तेषां वाचकतावच्छेदकत्वमेवोचितम् । 'पपाच' इत्यादावनेकेषां स्मारकतावच्छेदकतापतेश्च ।

८. किंच स्थानिनां वाचकत्वे तिङ्क्षु कृतिवाचकत्वं शत्रादिस्थले कर्त्रादिवाचकत्वमिति मीमांसकनैयायिकसंमता व्यवस्था न सिध्येत् । न च "कर्तरि कृत्" (पा. ३-४-६७) इत्यनुशासनात् शानचूत्वादिना कर्त्रर्थक-

---

६. **शक्तिग्राहकेति**—

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥"
(सिद्धान्तमुक्तावली, ४)

इत्युक्तशक्तिग्राहकेषु व्यवहार एव मुख्यतम इति भावः । **कारणत्वेति** ; सहकारिकारणत्वेत्यर्थः । **वर्णेष्वेव** ; आदेशेष्वेव ।

७. **तव मते** ; नैयायिकमते । **तद्धेतोरिति न्यायेनेति** ; 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायशरीरम् । **तेषाम्** ; आदेशानां तिबादीनाम् ।

८. पर आशङ्कते—**न चेति** । न च "लः कर्मणि" (पा. ३-४-६९) इति विहितस्य लकारस्याप्यतिङ्त्वात् "कृदतिङ्" (पा. ३-१-९३) इति कृत्संज्ञायां

त्वमिति वाच्यम् , तस्य तद्विधावप्रकृतेः, कर्मणि शानचो दौर्लभ्यापत्तेरित्यन्यत्र प्रपञ्चितम्। न च नामार्थयोर्भेदेनान्वयायोगात् 'चैत्रः पचमानः' इत्यादावनन्वयवारणाय तत्र लस्य कर्ता वाच्य इति वाच्यम्, 'लः कर्मणि' इति सूत्रस्य वैरूप्यापत्तेः। अस्मन्मते तु यथा न वैरूप्यं तथा आख्यातार्थनिरूपणावसरे प्रपञ्चयिष्यामः। न च लत्वस्य शक्ततावच्छेदकत्वेऽपि तिबाद्यादेशजन्यलकारोपस्थितेरेव कृत्युपस्थापकत्वात् न शतृशानच्स्थले दोष इति वाच्यम्। किमादेशानां वाचकत्वमभ्युपेयम्? उत स्थानिनाम्? नाद्यः, अर्धजरतीयतापत्तेः। नान्त्यः, वैरूप्यापत्तेरिति प्रागेवोक्तम्। न चादेशानामेव वाचकत्वे "लः कर्मणि' इत्यनुशासनस्यासंगततापत्तिः, वस्तुतस्तिबादिनिष्ठाया एव शक्तेरनुशासनलाघवाय कल्पिते लकारे कल्पितत्वादुपपत्तेः।

---

कर्त्रर्थकत्वे अविशेष इति वाच्यम्, 'अतिङ्' इति पर्युदाससामर्थ्येन तिङ्भाविनामपि लकाराणां कृत्संज्ञानिषेधस्य विवक्षितत्वात्। धातोर्हि विधीयमानाः प्रत्यया द्विविधाः—तिङः कृतश्च। तत्र यदि तिङ्स्थानिभूतानां लकाराणां कृत्त्वं स्यात् तदा तत्कार्याणि तदादेशेषु तिङ्क्ष्वपि प्राप्नुवन्तीति अतिङ्पदं व्यर्थं स्यादिति भावः। **तस्य**; 'कर्तरि कृत्' इत्यस्य। **तद्विधौ**; शानज्विधौ। **अप्रकृतेः**; अप्रकृतत्वात्। **कर्मणीति**; पच्यमान इत्यादौ। **तत्र**; शानज्विषये। **लस्य**; तत्स्थानिभूतलटः, "लटः शतृशानचौ" (पा. ३-२-१२४) इति लटः शानज्विधानात्। **असंगततापत्तिरिति**; सूत्रेण लकारस्यैव वाचकत्वमुच्यते, न तिङमिति भावः। **समाधत्ते**; **वस्तुत** इति।

९. अत्रेदं बोध्यम्—अत्र पक्षे अर्थबोधानुकूलशक्तिर्वर्णसमूह एव पर्याप्ता; न प्रत्येकम्; तथा सति प्रत्येकमर्थवत्त्वात् प्रातिपदिकत्वाद्यापत्तौ 'धनं, वनम्' इत्यादौ नलोपाद्यापत्तेः। किंच प्रत्येकं शक्तिमत्त्वेन वर्णादर्थबोधापत्तिः। किंच द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तिः। न च प्रत्येकं वर्णैरर्थस्मरणमात्रं जन्यते; चरमेण पुनः स्पष्टं जन्यते; प्रत्यक्ष इव स्मरणेऽपि वैजात्यस्वीकारे बाधकाभावादिति वाच्यम्; प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात्, गुरुत्वाच्च। न च प्रत्येकावृत्तेः कथं समुदायवृत्तित्वमिति वाच्यम्, द्वित्वादिवदुपपत्तेरिति दिक्।

१०. पदवाक्यस्फोटौ निरूप्येते—एवमादेशानां वाचकत्वे स्थिते 'घटेन' इत्यादौ व्याकरणभेदेनादेशभेदात् संहितावशात् प्रकृतिप्रत्ययभेदा-

---

९. **अत्र पक्षे**; वर्णस्फोटपक्षे। **वर्णसमूह एव**; तद्रूपप्रकृतिप्रत्ययभाग एव। **प्रत्यक्ष इवेति**; यथा रत्नपरीक्षकाणां प्रथमदर्शने रत्नरूपममलमप्रकाशमानमपि पुनःपुनः परीक्षमाणानां चरमे दर्शने निरवद्यं रत्नतत्त्वं सम्यक् चकास्ति, एवमिहापि प्रथमवर्णश्रवणे सुविशदमसंजातमप्यर्थस्मरणं चरमवर्णश्रवणे सुविशदं संजायत इत्यर्थः।

यदाह हरिः—

"नादैराहितबीजायां व्यञ्जकध्वनिना सह।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥"

(वाक्यपदीयम्, १-८९)

इति।

**प्रत्येकावृत्तेरिति**; अर्थावबोधकत्वशक्तेरिति शेषः।

१०. **संहितावशादिति**; राम-इन इत्यादौ "आद्गुणः" (पा. ६-१-८७) इत्येकादेशे गुणे सति कियानंशः प्रकृतिः, कियानंशः प्रत्यय इति संदेहात्

नवगमेन च प्रत्येकं ताभ्यामर्थानुपस्थितेर्विशिष्टस्यैव शक्तिरिति पदस्फोट-पक्षः। तथाहि—'घटेन' इत्यत्र घट इति प्रकृतिः, एन इति प्रत्ययो वा; घटे इति प्रकृतिः, न इति प्रत्ययो वेत्यादिप्रकारेण विशये विनिगमका-भावादनन्तशक्ततावच्छेदककल्पनापत्तेः, तत्तदज्ञानतां बोधानापत्तेश्च, वस्न-सादौ समुदायस्यैवादेशविधानेन तद्विभागस्य सर्वथा ज्ञातुमशक्यत्वात्, अवैयाकरणेन प्रत्येकं तदज्ञानेऽपि समुदायव्युत्पत्तिमात्रेण बोधाच्च समुदितस्य सुबन्तस्य शक्तिरिति।

११. एवं 'हरेऽव, विष्णोऽव' इत्यादौ प्रागुक्तरीत्या पदयोः स्पष्टमज्ञानेऽपि समुदायशक्त्या बोधात् समुदायस्यैव विशिष्टवाक्यार्थे शक्ति-रिति वाक्यस्फोटः। "अर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते" इत्यादिना "वृद्धिरादैच्" (पा. १-१-१) सूत्रादिभाष्ये व्यवहृतोऽयम्।

---

तयोरनिश्चय इत्यर्थः। **समुदायस्यैवेति**; "बहुवचनस्य वस्नसौ" (पा. ८-१-२१) इति समुदायस्यैवादेशविधानादिति भावः। **सुबन्तस्येति**; "सुप्तिङन्तं पदम्" (पा. १-४-१४) इति सुबन्तस्यैव पदत्वेन तत्र शक्तिरिति भावः।

११. **हरेऽवेत्यादि**; अत्र "एङः पदान्तादति" (पा. ६-१-१०९) इति पूर्वपरयोः पूर्वरूपे एकादेशे सति पदविभागो न स्ववगम इति भावः। **विशिष्टवाक्यार्थे इति**; संबोधनविषयहरिकर्तृकं प्रार्थनाविषयभूतमवनमित्यादिरूपे वाक्यार्थ इत्यर्थः। **अर्थवन्तीत्यादि**; न हि वाक्यानां शक्त्यनङ्गीकारे तेषामर्थ-वत्त्वव्यवहारो युज्यत इत्यर्थः।

१२. संसर्गरूपवाक्यार्थस्यापूर्वत्वात् शक्तिरिह संबन्धः । यत्तु —वृद्धव्यवहारात् प्राथमिकशक्तिनिर्णयो यथा मनसोपस्थिते घटादौ, तथात्रापि पदैः पदार्थोपस्थितावाकाङ्क्षाज्ञानादिसहकृतमनसा तदुपस्थितौ तत्र न शक्तिग्रह इति; तन्न, पदानां स्पष्टमज्ञानेन पदैः पदार्थोपस्थित्यसंभवात्; आकाङ्क्षाया एव वाक्यशक्तित्वेन तद्ग्रहातिरिक्तशक्तिग्रहाभावाच्च ।

१३. यदपि तात्पर्यज्ञानविषयतयोपस्थितेऽन्वयांशे तात्कालिकशक्तिग्रहसंभवः । तात्पर्यं च तत्तदर्थविषयकबोधजननेच्छया समुच्चारितत्वम् । 'घटमानय' इत्यादितो घटकर्मत्वप्रकारकनिरूपितत्वसंसर्गकानयनविशेष्यकबोधजननेच्छया समुच्चारितत्वाभावज्ञाने, अन्यबोधजननेच्छयोच्चारितत्वज्ञाने वा तथा बोधानुदयेन तयोः प्रतिबन्धकत्वकल्पनापेक्षया प्रागुक्ततात्पर्यप्रकारकनिश्चयत्वेनैव हेतुतायां लाघवेन तस्यावश्यकत्वात् । अर्थस्य प्रकारताविषयताविशेषणत्वेन भानाच्च न वाक्यार्थस्यापूर्वत्वहानिरिति; तन्न,

---

१२. स्पष्टमज्ञानेनेति; 'हरेऽव' इत्यादौ पदविभागस्य दुर्ज्ञेयतया 'हरे, अव' इति पदद्वयस्य न स्पष्टप्रतिपत्तिरित्यर्थः । आकाङ्क्षाया एवेति; आकाङ्क्षा शक्तिरिति नामभेदमात्रमिति भावः । तद्ग्रहेति; आकाङ्क्षाग्रहेत्यर्थः ।

१३. मीमांसकमतं दूषयितुं तदनुवदति—यदपीति । तात्पर्यज्ञानेति; तात्पर्यनिश्चयेत्यर्थः । तात्पर्यनिश्चयाकारश्च 'घटमानयेति वाक्यं घटकर्मकानयनबोधजननेच्छयोच्चारितम्' इत्यादिरूपः । अन्येति; कर्मत्वं घटीयान्यदिति बोधजननेच्छयोच्चरितत्वनिश्चये इत्यर्थः । तयोः; घटकर्मकानयनेच्छयोच्चरितत्वाभावनिश्च-

तस्यापूर्वत्वे तद्विषयकशक्तिग्रहवत्तद्विषयकतात्पर्यनिश्चयस्याप्यसंभवात् । शक्तिग्रहेऽप्यर्थस्य प्रकारतादिविशेषणतयैव भानेनापूर्वत्वाक्षतेश्च । शुकादिवाक्ये तात्पर्यव्यतिरेकनिश्चयेऽपि शाब्दबोधेन तद्धेतुत्वासंभवाच्च । एतेनापूर्वत्वं नाम शब्दजन्योपस्थित्यविषयत्वमेवेति प्रकारान्तरेण गृहीतेऽपि तात्पर्यनिश्चयविषयत्वसंभव इत्यपास्तम् ।

१४. न चैश्वरं तत्र तात्पर्यम्, तस्य फलैकोन्नेयतया प्राग्दुर्ज्ञेयत्वात् । अत एवेश्वरासत्त्वनिश्चयवतां मीमांसकानां बोधः; वेदवाक्याद्बोधानापत्तिश्च । न च तत्राध्यापकतात्पर्यम्, मूर्खाध्यापकोक्ते तदभावात् । मीमांसोपयोगस्तु न्यायजन्यलाघवादिज्ञानस्य वेदजन्यशाब्दबोधे तत्प्रामाण्यनिश्चये वा दाढर्चहेतुत्वात् । न च विज्ञवक्तृकवाक्यजन्यबोधे तात्पर्यधियो हेतुत्वेन शुकादिवाक्यस्य वेदस्य चातथात्वेऽपि न दोष इति वाच्यम्,

---

यस्य घटान्यकर्मकानयनेच्छयोच्चरितत्वनिश्चयस्य चेत्यर्थः । शुकादीति ; मनुष्याणामिव तेषामर्थविशेषबोधकत्वतात्पर्येण शब्दोच्चारणाभावादित्यर्थः । शुकादीत्यादिपदेन देवताप्रसादेन वा पूर्वजन्मसंस्कारेण वा मूर्खबालककृतोत्तमकाव्यस्य संग्रहः ।

१४. तत्र ; शुकादिवाक्ये । तस्य ; ईश्वरतात्पर्यस्य । फलैकेत्यादि ; शाब्दबोधमात्रानुमेयतयेत्यर्थः । ईश्वरासत्त्वेति ; धर्माणामेव फलप्रदत्वान्न तदतिरिक्ता कर्मसमाराध्या देवता नाम काचिदस्तीति तेषां मतम् ;

> "विग्रहो हविरादानं युगपत् कर्मसंनिधिः ।
> प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥"

इति तेषां सिद्धान्तात् ।

विज्ञत्वस्यानियतत्वात् । अपिच ‘अस्माद्वाक्यादर्थद्वयविषयकः शाब्दबोधो जायते ; प्रकरणादि तु कस्येति न जानीमः’ इति सर्वजनीनानुभवविरोधान्न तस्य शाब्दबोधहेतुत्वम् ।

१९. अत एव ‘पय आनय’ इत्युक्ते अप्रकरणज्ञेन दुग्धं वा आनेयं जलं वेति प्रश्नादिकं संगच्छते । न च तत्र पदार्थोपस्थितिरेव, न शाब्दबोध इति वाच्यम् ; पयःकर्मकमानयनमिति प्रकरणेन वाक्यजन्योपस्थितावपि तदापत्तेः ; सर्वत्रैवमेवापत्तौ शाब्दबोधोच्छेदापत्तेश्च । एतेन मानस एव तत्र बोध इत्युपस्थितपदार्थानामसंसर्गाग्रहमात्रेण प्रश्नादिसिद्धिरिति च परास्तम् , ‘शाब्दयामि’ इत्यनुव्यवसायाच्च । तात्पर्यनिर्णयादेरुपयोगस्तु प्रामाण्यनिश्चयद्वारा प्रवृत्ताविति गृहाण ।

१६. न चैवमश्वतात्पर्यकत्वेन निर्णीतात् ‘गेहे सैन्धवमस्ति’

——

**वेदवाक्यादिति** ; वेदानां नित्यत्वान्न तत्रेश्वरीयतात्पर्यवत्त्वसंभावनापीति भावः । **तत्र** ; वैदिकवाक्ये । **विज्ञः** ; ज्ञाता । **अतथात्वेन** ; विज्ञवक्तृकत्वाभावेन । तात्पर्यनिश्चयस्य हेतुत्वे दोषान्तरमाह—**अपिचेति** । **कस्य** ; अर्थद्वयमध्ये कतरस्येत्यर्थः ।

१९. **अत एवेति** ; तात्पर्यनिश्चयस्याहेतुत्वादेव । **दुग्धं वा जलं वेति** ; उभयोरपि पयःशब्दार्थत्वादिति भावः । **तदापत्तेः** ; शाब्दबोधाभावापत्तेः । **एतेन** ; तत्रापि शाब्दबोधस्यावश्यकत्वेन । **तत्र** ; ‘पय आनय’ इत्यत्र । स्वमते तात्पर्यनिश्चयस्योपयोगमाह—**तात्पर्यनिर्णयादेरिति** ।

१६. **एवमिति** ; तात्पर्यनिर्णयस्य प्रामाण्यनिश्चयोपयोगित्वे इत्यर्थः । **संशयोच्छेदापत्तिरिति** ; निर्णयज्ञाने सति संशयस्यानुदयात् संशयो न स्यादि-

इति वाक्यात् 'गेहे लवणमस्ति, न वा' इति संशयोच्छेदापत्तिरिति वाच्यम्; तत्राप्रामाण्यसंशयेन तदनुच्छेदात्। तदभावे त्विष्टापत्तिरेव।

१७. तस्मात्—तत्परत्वाभावज्ञानस्यान्यपरत्वज्ञानस्य च फलबलात् प्रतिबन्धकत्वमेव कल्प्यम्; यदि तत्सत्त्वे तदर्थविषयकबोधाननुभवः; प्रामाणिकगौरवस्यादोषत्वादिति यदुक्तं तन्नादरणीयम्।

१८. एवं 'घटमानय' इत्यादौ संसर्गरूपो वाक्यार्थः समुदायशक्यः। वृद्धव्यवहारात् प्रथमतो विशिष्टे वाक्यार्थत्वग्रहेऽपि आवापोद्वा-

---

त्यर्थः। न हि 'अयं स्थाणुः' इति निश्चये सति 'अयं स्थाणुर्वा पुरुषो वा' इति संशय उत्पद्यत इति भावः। तत्र; अश्वतात्पर्यकत्वे। **तदनुच्छेदात्**; संशयानुच्छेदात्। **तदभावे तु**; अप्रामाण्यसंशयाभावे तु। **इष्टापत्तिरिति**; संशयोच्छेद इष्ट एवेत्यर्थः।

१७. तात्पर्यज्ञानस्य कारणत्वाभावमुपसंहरन् परोक्तं खण्डयति—**तस्मादिति**। **तत्सत्त्वे इति**; तत्परत्वाभावज्ञानस्य तदन्यपरत्वज्ञानस्य च सत्त्वे इत्यर्थः। **प्रामाणिकगौरवेति**; न हि गौरवमित्येव सर्वं त्याज्यम्; अन्यथा घटानां बहुत्वे गौरवमिति घटैकत्वमेव लाघवादङ्गीकरणीयं स्यात्। किं तु प्रामाणिकत्वाप्रामाणिकत्वे परीक्ष्य यद्यप्रामाणिकं तदा गौरवस्य दोषत्वं वक्तव्यम्। अत्र तु प्रतिबन्धकत्वस्य प्रामाणिकत्वात् गौरवं न दोषायेति भावः। **तन्नादराणीयमिति**; तत्रापि तद्बोधेऽप्रामाण्यग्रहजनकतयैवोपपत्तौ प्रतिबन्धकत्वकल्पनमप्रामाणिकं गौरवपराहतं चेति भावः।

१८. एवं पदस्फोटमुपपाद्य वाक्यस्फोटमुपपादयति—**एवमिति**। पदस्फोटे या युक्तयः प्रतिपादिताः, ताभिरेव युक्तिभिर्वाक्यस्फोटोऽपि सिध्यतीत्यर्थः। ननु 'घटमानय' इति वाक्यात् घटकर्मकानयनरूपस्य विशिष्टार्थस्य भानात्

पाभ्यां पदानां पदार्थेषु शक्तिकल्पनात् वाक्यस्य परिशेषेण संसर्ग एव तत्सिद्धिः। यत्तु वाक्यार्थस्यापूर्वत्वात् तत्र शक्तिग्रहासंभव इति; तन्न, वृद्धव्यवहारदर्शनसहकृतमनसोपस्थितविशिष्टे पदेनेव तद्ग्रहणसंभवात्। वस्नसादौ युष्मदाद्यर्थस्य कर्मत्वादेश्च संसर्गे शक्तिग्रहस्यैवमेवोपपाद्यत्वात्। इदमेवाभिप्रेत्य—

"अर्थे विशिष्य संबन्धाग्रहणं चेत् समं पदे।
लक्षणादधुना चेत् तत पदेऽर्थेऽप्यस्तु तत्तथा"॥

(वैयाकरणभूषणसारः, श्लो. ६३)

इति वैयाकरणमतोन्मज्जने दीक्षिताः। लक्ष्यतेऽनेनेति लक्षणं मनः, उपदेशो वा।

---

कथं संसर्गमात्रस्य वाक्यार्थत्वमित्यत्राह—वृद्धेत्यादिना। **आवापोद्वापाभ्यामिति**; आवापः पदान्तरप्रक्षेपः, उद्वापः विद्यमानस्य निरसनम्; यथा 'घटमानय, पटमानय, घटमपसारय' इत्यादिषु। **संसर्ग एवेति**; "अनन्यलभ्यः शब्दार्थः" इति न्यायेन संसर्ग एव वाक्यार्थ इत्यर्थः। परोक्तं खण्डयति—**यत्त्विति**। **इदमेवेति**; मानसोपस्थितिविषये शक्तिग्रहसंभवमेव। **अर्थे** इत्यादिः दीक्षितग्रन्थः। तस्यायमर्थः—ननु वाक्यार्थस्यापूर्वत्वात् कथं तत्र शक्तिग्रह इत्याशङ्क्याह—**अर्थे इति**; वाक्यस्येति शेषः। वाक्यस्य वाक्यार्थे विशिष्य शाक्यग्रहणं चेत् तर्हि तत् पदेऽपि समम्; पदे अन्वयांशे शक्तिरिति पक्षेऽपि तद्ग्रहासंभवस्तुल्य इत्यर्थः। यदि च पदशक्तिः पदार्थांशे ज्ञाता अन्वयांशे चाज्ञातोपयुज्यत इति कुब्जशक्तिवादस्तदा ममापि वाक्यस्य शक्तिरज्ञातैवोपयुज्यत इति वादस्तुल्य इति भावः। ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवत् अन्वयांशेऽपि तद्ग्रह इति चेत् तुल्यमित्याह—**लक्षणादिति**। लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनः, तस्मात्। पदे लक्षणात् तद्ग्रहश्चेत् तर्हि वाक्येऽप्यस्तु तथेत्यर्थः।

१९. ननु—आकाङ्क्षादिसहकारेण पदैरेव संसर्गस्यापि भानोपपत्तौ तत्र वाक्यस्य शक्तिकल्पने मानाभावः, गौरवं च। आकाङ्क्षा च 'घटकर्मकमानयनम्' इत्यादिबोधे घटपदोत्तराम्पदस्य, ततो धातोः, तत आख्यातस्येत्यादिसमभिव्याहारविशेषज्ञानस्य कारणत्वरूपा। तज्ज्ञानं कारणम्। अत एव 'घटः कर्मत्वमानयनं कृतिः' इत्यादितो विपरीतव्युत्पन्नस्य बोधः, सद्व्युत्पन्नस्य चाबोध उपपद्यते। एतेन यत्पदं यत्पदेन सह तात्पर्यविषयीभूतयादृशार्थान्वयबोधजनकं तत्पदे तस्य पूर्ववर्तित्वोत्तरवर्तित्वादिरूपः समभिव्याहारस्तादृशबोधे आकाङ्क्षा; तज्ज्ञानं कारणमिति परास्तम्; सद्व्युत्पन्नासद्व्युत्पन्नविभागोच्छेदापत्तेः। यदि तत्परिहाराय यादृशबोधे यत्समभिव्याहारः कारणं, तादृशबोधे तत्कारणत्वज्ञानमपि तथे-

---

वैयाकरणमतोन्मज्जने; वैयाकरणसिद्धान्तकारिका इति प्रथिते तन्नामके ग्रन्थ इत्यर्थः। दीक्षिताः; भट्टोजिदीक्षिताः। कारिकास्थं लक्षणपदं व्याचष्टे—लक्ष्यत इत्यादिना।

१९. नैयायिकः शङ्कते—नन्विति। तत्र; संसर्गे। न केवलं मानाभावः, किं तु दोषान्तरमपीत्याह—गौरवं चेति। आकाङ्क्षां निर्वक्ति—आकाङ्क्षा चेत्यादिना। चोऽनुक्तसमुच्चये। तेन एकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यत् ज्ञानं तद्विषयेच्छापि कारणमिति मन्तव्यम्। सा च यद्यपि पुरुषनिष्ठा, तथाप्याकाङ्क्षाविषये अर्थे समारोपात् 'अयमर्थोऽर्थान्तरसाकाङ्क्षः' इत्यर्थनिष्ठत्वव्यवहारः। 'साकाङ्क्षं पदम्' इति व्यवहारस्तु साकाङ्क्षार्थबोधकमित्यर्थको बोध्यः। तदुक्तं समर्थसूत्रे भाष्ये—"परस्परव्यपेक्षां सामर्थ्यमेके। का पुनः शब्दयोर्व्यपेक्षा? न ब्रूमः शब्दयोरिति। किं तर्हि? अर्थयोः। इह

त्युच्यते, तर्हि आवश्यकत्वात् सैवाकाङ्क्षास्तु । यत्तु—अकारणत्वनिश्चयः प्रतिबन्धकः । तत्पदव्यतिरेकप्रयुक्ततात्पर्यविषयतावच्छेदकावच्छिन्नान्वयाननुभावकत्वनिश्चयो वा कारणम् । तादृशनिश्चयत्वेन तत्पदव्यतिरेकप्रयुक्तान्वयानुभवप्रतियोगितावच्छेदकावच्छिन्नाभावत्वेन वा हेतुत्वे विनिगमनाविरहात् पृथगेवान्वयानुभावकत्वतात्पर्यनिश्चययोर्हेतुत्वमिति तत्त्वमिति;

---

राजा पुरुषमपेक्षते ‘ममायम्’ इति । पुरुषो राजानमपेक्षते ‘अहमस्य’ इति” (महाभाष्यम् २ १-१)। **कारणमिति;** अत्रेदमवधेयम्—स स समभिव्याहारस्तादृशतादृशबोधजनक इति ज्ञानं कारणम् । अत एव यस्य पुरुषस्य यादृशसमभिव्याहारे यादृशान्वयबोधकत्वग्रहः, तस्य तेन तादृशान्वयबोध इत्यनुभवः । स स समभिव्याहारस्तत्तद्बोधजनक इत्ययमेक एवैश्वरः समय इति । **अत एव;** पूर्वोक्तरीत्या समभिव्याहारविशेषस्य कारणत्वादेव । **विपरीतव्युत्पन्नस्य ;** असद्व्युत्पन्नस्य । सद्व्युत्पन्नत्वं च व्याकरणोदितप्रकृतिप्रत्ययविभागतत्तदर्थविभागतत्तदन्वयबोधविषयकज्ञानवत्त्वम् । तदभाववान् असद्व्युत्पन्नः । **एतेन ;** पूर्वोक्तरीत्या आकाङ्क्षानिर्वचनेन । **यत्पदम् ;** घटपदम् । **यत्पदेन सह ;** अस्तिपदेन सह । **यादृशार्थेति ;** घटकर्तृकसत्तारूपार्थेत्यर्थः । **तत्पदे ;** घटपदे । **तस्य ;** अस्तिपदस्य । **पूर्ववर्तित्वोत्तरवर्तित्वेति ;** अस्तिपदापेक्षया घटपदस्य पूर्ववर्तित्वम्; घटपदापेक्षया अस्तिपदस्योत्तरवर्तित्वमित्यर्थः । **समभिव्याहारः ;** सांनिध्यम् । **तज्ज्ञानम् ;** तादृशसमभिव्याहारज्ञानम् । **विभागोच्छेदापत्तिरिति ;** ‘घटमानय’ इति घटपदाम्पदधात्वाख्यातसमभिव्याहारे यथा केषांचित् व्युत्पत्तिः, तथा ‘घटः कर्तृत्वमानयनं कृतिः’ इत्यादितोऽप्यन्येषां व्युत्पत्तिसत्त्वात् सर्वेऽपि सद्व्युत्पन्ना एव स्युः । न तु कोऽप्यसद्व्युत्पन्न इति भावः । **तत्परिहाराय ;** पूर्वोक्तविभागो-

तन्न ; 'घटमानय' इत्यादितो घटपदाम्पदयोः प्रत्येकं गृहीतशक्तिकस्य तादृशानुपूर्वीज्ञानादिमतोऽकारणत्वनिश्चयाभाववतश्च विपरीतव्युत्पन्नस्य बोधापत्तेः ; गौरवाच्च । एतेनान्योऽपि परास्त इति चेत्—न ; पदानां पदार्थेष्वपि शक्तिसिद्ध्यनापत्तेः । घटत्वप्रकारकघटविशेष्यकबोधे घटपदज्ञानस्य तत्कारणत्वज्ञानस्य च कारणतयैवादोषात् ।

२०. न चेश्वरेच्छाविषयत्वरूपशक्तेः क्लृप्तत्वेन न किंचिदधिकं मम कल्प्यमिति वाच्यम्, 'अस्माद्वाक्यादयं संसर्गो बोद्धव्यः' इतीश्व-

---

च्छेदापत्तिपरिहाराय । सैव ; पूर्वोक्तसमभिव्याहारविशेष एव । सैवेति स्त्रीत्वमाकाङ्क्षेति विधेयानुगुण्यात् "शैत्यं हि यत् सा प्रकृतिर्जलस्य" (रघुः ९-९४) इतिवत् । परोक्तमनूद्य खण्डयति—यत्त्विति । अकारणत्वेति ; शाब्दबुद्धिं प्रतीत्यादिः । तस्य प्रतिबन्धकत्वकल्पनापेक्षया ज्ञानविशेषस्य कारणत्वकल्पने लाघवादाह—तत्पदेत्यादि । एवं पूर्वोक्तयोः पक्षयोर्विनिगमनाविरहात् निष्कृष्टं पक्षान्तरमाह—तादृशेत्यादि । अकारणत्वनिश्चयाभाववतश्चेति ; प्रतिबन्धकाभाव उक्तः । एवं नैयायिकमतमनूद्य समाधते—नेति ।

२०. वाक्यशक्त्यङ्गीकारे गौरवमाशङ्कते—न चेति । क्लृप्तत्वेन ; पदे इत्यादिः । मम ; नैयायिकस्य । 'अस्मात् पदादयमर्थो बोद्धव्यः' इति पदस्यैवार्थबोधकतयेश्वरेच्छाविषयत्वात् तत्र शक्तिर्मम सिद्धा । वाक्यस्य वाचकत्ववादिनां वैयाकरणानां तु वाक्य ईश्वरेच्छाविषयत्वरूपा शक्तिः कल्पनीयेति गौरवमित्यभिमानः । समाधत्ते—अस्मादित्यादि । ईश्वरेच्छाविषयत्वं वाक्येऽपि समानम् । 'अस्मात् पदादयमर्थो बोद्धव्यः' इति पद इव 'अस्मात् वाक्यादयमर्थो बोद्धव्यः' इति वाक्येऽपि तदिच्छाविषयत्त्वस्य क्लृप्तत्वात् । न हीश्वरः स्वयमागत्य पद एव मदीयेच्छाविषयत्वं न वाक्य इति ब्रवीतीत्यर्थः ।

रेच्छाविषयत्वस्य ममापि क्लृप्तत्वात्। न च सा न शक्तिः; विनिगमनाविरहात्। न च जनकत्वस्य बहुपदार्थघटितत्वेन तस्य कारणतावच्छेदकत्वापेक्षया अतिरिक्तशक्तेरेव तत्त्वमुचितमिति वाच्यत्, ममापि तुल्यत्वात्; अतिरिक्तपदार्थकल्पने गौरवाच्च। यदि जनकत्वमेवाखण्डोपाधिरूपं स्वीकृत्य तदेव शक्तिरिति ब्रूषे; तदा सिद्धो वाक्यस्फोटः। पदज्ञानकारणत्वरूपपदशक्तिज्ञानस्येव समुदायज्ञानकारणत्वरूपवाक्यशक्तिज्ञानस्य हेतुतायास्त्वयाभ्युपगमात्। न च जनकतायाः शक्तित्वे 'पदं शक्तम्'

---

यदि नैयायिकानां पदे तथा विश्वासः, तदा वैयाकरणानामस्माकं वाक्येऽपि तथेति समानम्। सा; वाक्यविषयकेश्वरेच्छा। गौरवमाशङ्कते—**न चेति; बहुपदार्थघटितत्वेनेति**; अयं भावः—वैयाकरणानां बोधजनकत्वस्यैव शक्तित्वेन—जनकत्वं नाम प्रादुर्भावकारणत्वम्; प्रादुर्भावो नाम पूर्वमभूतस्यार्थस्याभिव्यक्तिः; तथा च प्रागभावप्रतियोग्यर्थनिष्ठकार्यतानिरूपितकारणातावत्त्वं जनकत्वमिति फलति। तथा च गुरुभूतधर्मस्यावच्छेदकत्वकल्पनापेक्षया शक्तित्वस्य तत्कल्पनं लघ्विति। समाधत्ते—**ममापीति**। न हि भवान् मीमांसक इव शक्तेरतिरिक्तपदार्थत्वमभ्युपैति, येन लाघववाचोयुक्तेरवकाशः स्यात्। किन्त्वीश्वरसंकेतरूपत्वमेव भवदभिमतम्। तदा तस्य निर्वचने गौरवं तुल्यमेव। यदि मीमांसकपरिपाटीमवलम्ब्य लाघवं विवक्ष्यते, तदा तत्संबन्धिनो दोषा अपि भवन्तं न त्यजेयुरित्यर्थः। **अतिरिक्तेति**। यदि निर्वचनानर्हमखण्डोपाधिरूपं जनकत्वमेव शक्तिरिति ब्रूषे, तदास्माकमपि अखण्डोपधिरूपं बोधजनकत्वमेव शक्तिरिति सिद्धं नः समीहितमित्याह—**यदीति**। तदेव विशदयति—**पदज्ञानेति**। **जनकतायाः** बोधजनकतायाः। **शक्तित्वे**;

इति व्यवहारानापत्तिः ; न हि पदं बोधकारणम् ; अपि तु तज्ज्ञानमिति वाच्यम् । अनुमितिं प्रति लिङ्गस्यैव स्वज्ञानद्वारा तस्यापि तत्त्वात् । एवं च वाक्यशक्तिरेवाकाङ्क्षेति परपरिभाषामात्रमवशिष्यते । अत एव संसर्गो वाक्यार्थ इति किंवदन्ती संगच्छते । प्राथमिकशक्तिग्रहस्य च

---

शक्तिपदार्थत्वे । **व्यवहारानापत्तिरिति** ; शक्तिविशिष्टं शक्तम् । शक्तिश्च बोधजनकत्वम् । एवंच बोधजनकत्वविशिष्टं शक्तमित्यायातम् । न हि केवलं पदं बोधजनकम्, अज्ञातस्यापि पदस्य बोधजनकत्वापत्तेः । किंतु पदज्ञानमेव बोधजनकमिति वक्तव्यम् । एवं च बोधजनकत्वं पदज्ञान एव वर्तते, न केवलपद इति 'शक्तं पदम्' इति व्यवहारो दुष्टः स्यादिति भावः । समाधत्ते—**अनुमितिं प्रतीति** । केवलस्य धूमस्य वह्निसाधकत्वे धूममजानतोऽपि पुरुषस्य वह्नेरनुमित्युदयापातात् धूमज्ञानमेव कारणं वाच्यम् । तथाच ज्ञानविषयीभूतधूमस्यानुमितिकरणत्वात् 'धूमः अनुमितिकरणम्' इति यथा व्यवहारः, तथा पदज्ञानस्य करणत्वेऽपि ज्ञानविषयीभूतपदस्य करणत्वात् 'शक्तं पदम्' इति भाक्तो व्यवहारो युज्यत इत्यर्थः । **परिभाषामात्रमिति** । आकाङ्क्षेति नैयायिकैर्भवद्भिरुच्यते ; सैव वाक्यशक्तिरित्यस्माभिरुच्यत इत्यर्थः । एवंच वाक्यशक्तिं नाङ्गीकुर्मः, आकाङ्क्षां त्वङ्गीकुर्म इति वदद्भिः केवलमाहोपुरुषिकैवाविष्क्रियत इत्यर्थः । तदेतत् 'शिरश्छेदेऽपि शतं न ददामि ; विंशतिपञ्चकं तु ददामि' इति बालिशभाषितमनुकरोतीति भावः । वाक्यशक्तिवादिनामस्माकं सकलतान्त्रिकानुग्रहोऽपि वर्तत इत्याह—**अत एवेति** । **संगच्छत** इति ; अन्यथा तस्मिन् वाक्यार्थत्वव्यवहारो न युज्येत । वाक्यजन्यबोधविषयो हि वाक्यार्थः । वाक्यशक्तेरभावे वाक्यजन्यो बोध एव नास्तीति कथं तद्विषयत्वं संसर्गस्य स्यादिति भावः । स्वमत औचित्यमप्याह—**प्राथमिकेति** । शक्तिग्राहकशिरो-

सर्वथा न बाधः। अत एव समासग्रहणं वाक्योऽतिव्याप्तिवारणायेति भाष्यादिग्रन्थाः संगच्छन्ते। तदुक्तं हरिणा—

"अशब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्" इति।

(वाक्यपदीयम् २—१६)

---

मणिना व्यवहारेण प्रथमं 'गामानय' इत्यादिवाक्येष्वेव शक्तिग्रहो जायते। वाक्यशक्तिवादिभिरस्माभिः स एव शक्तिग्रहः स्थिरीकृत इति न लेशतोऽपि तस्य बाधः। आवापोद्धारादिना पदशक्तिं व्युत्पादयतां तु तस्य बाधः स्पष्ट एवेति भावः। भाष्यसंमतिमप्याह—**अत एवेति**। **समासग्रहणमिति**; "कृत्तद्धित-समासाश्च" (पा. १-२-४६) इत्यत्रार्थवत्सूत्रेणैव प्रातिपदिकसंज्ञायां सिद्धायां समासग्रहणं नियमार्थमिति भाष्य उक्तम्। यदि वाक्ये शक्तिर्नाङ्गीक्रियेत तदा अर्थवत्त्वाभावात् तत्र प्रातिपदिकसंज्ञायाः प्रसक्तेरेवाभावेन तद्वारणाय समासग्रहणस्य नियमार्थत्वकथनमसंगतं स्यादिति भावः। अत्राभियुक्तवचनं प्रमाणयति—**तदुक्तमिति**। **हरिणेति**; वाक्यपदीये द्वितीयकाण्डे भाट्टाभिमताभिहितान्वयवादनिराकरणपरेयं कारिका।

"सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम्॥"

(वाक्यपदीयम २-१९)

इति पूर्ववर्तिनी कारिका। अयमत्राभिसंधिः—शब्दव्युत्पत्तौ द्वयी गतिः—अन्विताभिधानवादः, अभिहितान्वयवादश्च। 'घटमानय' इत्यत्र घटपदस्यानयनक्रियायां कर्मतयान्वितो घटोऽर्थः; न तु घटसामान्यम। एवम् आनयेति पदस्य घटकर्मकमानयनमर्थः; न तु आनयनमात्रम्—इत्यन्विताभिधानवादः। तदुक्तम्—

"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्।
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम॥" इति।

(तन्त्ररहस्ये शब्दपरिच्छेदः)

अयमत्र श्लोकार्थः—पदानि तावत् श्रूयन्ते। श्रुतानि च व्युत्पत्त्यनुसारेण पदार्थस्वरूपाणि परस्परानन्वितानि स्मारयन्ति। स्मृतेषु पदार्थेऽवाकाङ्क्षादीनां परामर्शः। ततो न्यायप्रवृत्तिः। ततो व्यक्तिविशेषाभिव्यक्तिः। ततः सम्यङ्न्यायानुगृहीतानि पदानि नानापदार्थविशिष्टैकप्रधानार्थात्मकं वाक्यार्थमभिदधति। अयमेव पक्षः प्राभाकरैर्वेदान्तिभिर्वैयाकरणैश्चादृतः।

अभिहितान्वयवादस्तु—पदैः पदार्थाः पृथक् पृथक् प्रथममेवाभिधीयन्ते। तच्चाभिधानं पदार्थस्मरणमात्रतुल्यम्। यदाहुः—

"पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते।
यदाधिक्यं भवेत्तत्र स पदस्य न गोचरः॥" इति।

(श्लोकवार्तिकम्—शब्द. १०७)

अयमत्र श्लोकार्थः—घटादिपदं घटाद्यर्थजातमितरानन्वितमेवाभिधाव्यापारेणावबोधयति। स चायमवबोधः स्मरणतुल्यः। अतः पदानि स्मारकतुल्यानि। यः पुनः 'घटमानय' इत्यादावधिकः क्रियान्वयादिरवगम्यते स वाक्यगम्यः, न तु पदस्य गोचरः। ते चाभिहिताः पदार्था योग्यत्वेन परामृश्यमानाः स्वयमेव विशेषसंसर्गात्मकं वाक्यार्थमवबोधयन्ति। न तु तत्र शब्दव्यापारः, अर्थैरेवार्थविशेषसिद्धेः; यथा कविभिरालोच्यमानाः पदार्था एव वाक्यार्थरूपमर्थविशेषसंसर्गात्मकमवबोधयन्ति। पश्चादेव प्रतिपन्नानुरोधेन शब्दरचना। एवमर्था एवार्थमवबोधयन्तीति। अयं च पक्षो भाट्टैर्मीमांसकैरादृतः। स च "सामान्यार्थस्तिरोभूतः" (वाक्यपदीयम् २-१९) इत्यादिना निरस्यते। ते ह्येवं मन्यन्ते—पदसंघात एवाकाङ्क्षायोग्यतादिवशात् परस्परमन्वितो वाक्यम्। संसर्गश्च वाक्यार्थः। न पृथग्वाक्यं नाम किंचित्, न वा वाक्यार्थ इति। तत्र 'देवदत्त गामभ्याज शुक्लां दण्डेन' इति देवदत्तादीन्येव पदानि वाक्यमिति वक्तव्यम्। तत्र देवदत्तपदं तावत् यदि तदभिमताभिहितान्वयवादरीत्या सामान्यमात्रे प्रथमं वर्तेत, तदा तस्य गवादिपदकाले तिरोधानात् असत्त्वमेवेति कुतः पदान्तरश्रवणकाले तदर्थप्रतीतिः? कुतस्तरां पदान्तरसंनिधाने तस्य विशेषेऽवस्थानम्? कुतस्तमां वा सामान्यलक्षणस्यार्थस्य पूर्वं वाच्यत्वेन परिगृहीतस्येदानीं पदान्तरसंनिधाने त्यागः? तथा सति शब्दार्थ-

संबन्धस्यानित्यतापत्तेः स्वमतव्याघातो दुष्परिहरः। अथवा कृत्वा चिन्तयामः—पदान्तरसंनिधाने स्वार्थान्निवृत्तोऽसौ शब्दः क्वावतिष्ठताम्? पूर्वं स्थितोऽर्थः परित्यक्तः, अर्थान्तरे च तस्य वाचकत्वं नास्तीति सर्वथा निरर्थकः स्यात्। किंच यद्युक्तरीत्या पदार्थैरेव वाक्यार्थव्यक्तिरिति वाक्यार्थस्याशाब्दत्वमुच्यते तदा पदार्थोऽप्यशाब्दः स्यात्। एवं च शब्दार्थयोर्वाच्यवाचकभावलक्षणः संबन्धो हीयेत। अयं भावः—भाट्टा मीमांसका हि वाक्यशक्त्यङ्गीकारे अन्विताभिधानवादे चेत्थं दोषमुदाहरन्ति—

"वाक्येनैव हि वाक्यार्थः साक्षादेवाभिधीयते।
उपलक्षणतश्चास्य संबन्धग्रहसंभवः॥
वाक्यं गोपदयुक्तं यत् तत्सास्नादिमदन्वितम्।
वाक्यार्थं वदतीत्येवं व्युत्पत्तिः सुकरैव हि॥
सत्यं व्युत्पत्तिरेवं स्यात् तथापि तु न वाक्यतः।
वाक्यार्थावगतिर्युक्ता तिरोभावेऽपि दर्शनात्॥
पूर्वभागेषु वाक्यस्य विस्मृतेष्वपि दृश्यते।
वाक्यार्थावगतिः पुंसां पदार्थस्मृतिशालिनाम्॥" इति।

(शास्त्रदीपिका १-१-७)

यथैव विस्मृतपूर्ववर्णानामन्तिमवर्णमात्रान्न पदार्थावगतिर्भवति, तथैव वाक्यावयवेषु पूर्वपदेषु विस्मृतेषु वाक्यार्थावगतिर्न स्यात्। दृश्यते हि विस्मृतपूर्वपदानामपि दीर्घतमेषु वाक्येषु वाक्यार्थावगतिः। न च स्वरूपेण विस्मृतेऽपि स्मर्यमाणपदार्थवशादेव तद्वाचिपदयोगितां वाक्यस्यानुमाय ततो वाक्यार्थावगतिरिति युक्तम्, अस्यां प्रणाड्यां प्रमाणाभावात्। संभवति च पदार्थेभ्यो वाक्यार्थावगतिः। येऽप्याकाङ्क्षितसंनिहितयोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदान्येव वाक्यार्थप्रत्यायकानीति ब्रुवते, तेषामपि विस्मृतेषु पदेषु वाक्यार्थावगतिर्न स्यादिति तुल्यमेव दूषणमिति। वाक्यार्थविषये तैरुक्ता दोषाः पदार्थविषये तेषामप्यापतन्तीति तदीयान्येवास्त्राणि तान् प्रहरेयुः। पदेष्वपि पूर्वपूर्ववर्णा विनष्टा इति कथं पदज्ञानं स्यात्? कथं वा पदार्थावबोधः? इति।

२१. केचित्तु घटमानयेत्यादावप्येकैव शक्तिर्विशिष्टवाक्यार्थनिरूपिता ; समुदाये व्युत्पन्नानां तत एव बोधस्यानुभविकत्वात् ; व्यवहाराधीनप्रथमव्युत्पत्त्या समुदाये विशिष्टनिरूपिताया एव शक्तेर्ग्रहाच्च । न चावापोद्वापाभ्यामवयवशक्तिनिर्णयेन तस्या अप्रामाणिकत्वमिति वा-

---

२१. अत्र मतभेदमाह—**केचित्त्विति** । **एकैव शक्तिरिति** ; वाक्य एव शक्तिः, न तु तद्घटकेषु पदेष्वपि । तत्र हेतुमाह—**समुदाय** इति । घटमानयेति प्रयोजकवृद्धव्यवहारानन्तरं प्रयोज्यवृद्धस्य घटकर्मकमानयनं पश्यन् व्युत्पित्सुः 'घटमानय' इति वाक्यस्य घटानयने शक्तिं प्रतिपद्यते । अनन्तरमावापोद्वापाभ्यां घटमिति पदे आनयेति पदे च शक्तिं प्रतिपद्यत इति पदशक्तिवादिनां मतम् । यैः पुनरावापोद्वापघटितवाक्यानि न श्रुतानि, श्रुतान्यपि वा नावधारितानि तेषां वाक्येनैव बोधस्यानुभवसिद्धत्वात् पृथक् पदेषु शक्तिग्रहो न जायते । किंच शक्तिग्राहकशिरोमणिना व्यवहारेण समुदायेष्वेव शक्तिग्रहात् समुदायशक्तिरेव प्रामाणिकी, न पदशक्तिः ; केवलपदेषु व्यवहारतः शक्तिग्रहासंभवात् । ननु वाक्यशक्तिग्रहानन्तरमावापोद्वापाभ्यां पदेषु शक्तिग्रहो भविष्यतीत्यत्राह—**न चेति** । आवापः संयोजनम ; उद्वापः परित्यागः । 'घटमानय' इत्यत्र 'घटमपसारय' इत्युक्तौ 'अपसारय' इत्यस्य संयोजनम् ; 'पटमानय' इत्युक्तौ घटपदस्य परित्यागः । एवमावापोद्वापाभ्यां घटपदस्य कलशे शक्तिः, आनयपदस्य आनयने शक्तिश्च ग्रहीष्यत इति भावः । **तस्याः** ; वाक्यशक्तेः । **अप्रामाणिकत्वमिति** ; पदशक्त्यैव निर्वाहे वाक्यशक्त्यङ्गीकारे गौरवात् सा नादरणीयेति भावः । गुरुरपि यदि प्रामाणिकी स्यात् तदा प्रमाणानुगृहीतत्वाद्गौरवं न दोषायेति वक्तुं पार्येतापि । न हि तथा प्रकृत इति भावः । समाधत्ते—**असंजातेति** ; पूर्वस्येति शेषः । **असंजातविरोधित्वेनेति** ; पूर्वमीमांसायां "श्रुतेर्जाताधिकारः स्यात् । वेदो वा प्रायदर्शनात् " (मीमांसासूत्रम् ३-३-१, २) इत्यादिनोपक्रमोपसंहारयोर्मध्ये

त्थम्; असंजातविरोधित्वेनोत्तरकालस्यैव तत्त्वकल्पनात्। 'हरेऽव' इत्यादौ तदावश्यकत्वाच्च।

---

उपक्रमस्य प्राबल्यं स्थापितम्। तत्र हि—"प्रजापतिरकामयत प्रजाः सृजेयेति। स तपोऽतप्यत। तस्मात्तेपानात् त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्ने ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः" इत्युपक्रम्य श्रूयते—"तस्मादुच्चै ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना" इति (ऐतरेयब्राह्मणम्, ९-९-६)। तत्र संशयः—किमुच्चैष्ट्वादय ऋगादिमन्त्राणां धर्मः, ऋचां मन्त्रेणोच्चैरिति; किं वा वेदधर्माः, ऋग्वेदेनोच्चैरिति। उपक्रमे वेदशब्दश्रवणात् उपसंहारे ऋगादिशब्दश्रवणाच्च संदेहः। वेदशब्दो हि मन्त्रब्राह्मणसमुदायस्य वाचकः; नैकस्य मन्त्रस्य ब्राह्मणस्य वा वाचकः, अप्रसिद्धेः। न ह्येकं द्वे त्रीणि वा वाक्यान्यधीत्य "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्" (मनुस्मृतिः, ३-२) इति शास्त्रार्थमनुष्ठितं मन्यन्ते। तस्मात्तत्समुदायो वेदः। ऋगादिशब्दास्तु मन्त्रवाचकाः, "तेषामृग्यत्रार्थवशेन पादव्यवस्था, शेषे यजुःशब्दः, गीतिषु सामाख्या" (मीमांसासूत्रम्, २-१-३९) इति तन्निर्वचनात्। तत्रायं पूर्वपक्षः—विधेः प्रधानत्वादप्राप्तविषयत्वाच्च 'न विधौ परः शब्दार्थः' इति न्यायानुग्रहेण "उच्चै ऋचा क्रियते" इत्यस्य प्राबल्यम्। "प्रजापतिरकामयत" इत्यादीनां तु अर्थवादत्वेन गुणत्वादनुवादत्वाच्च दौर्बल्यम्। तस्मात् उपक्रमस्थवेदशब्दस्य ऋगादिमन्त्रमात्रपरत्वमिति। सिद्धान्तस्तु—वेदशब्द उपक्रमगतोऽसंजातप्रतिपक्षत्वात् यथाश्रुतार्थपर एवावधार्यते। तस्मिंश्चावधारिते सत्युपसंहारगतमृगादिपदमुपसंजातप्रतिपक्षत्वात् यथाश्रुतार्थे तदेकवाक्यतामप्रतिपद्यमानं तदनुगुणतया मन्त्रब्राह्मणसमुदायात्मकवेदपरतयैवात्मानं लभते, नान्यथा; तस्मादुच्चैष्ट्वं वेदधर्म एव। ऋग्वेदेन यत् क्रियते तदुच्चैरित्युपक्रमस्य प्राबल्यं स्थापितम्। तथेहापि व्युत्पित्सोः प्रथमं जायमानो वाक्यशक्तिग्रहः पश्चादावापोद्वापाभ्यां जायमानात् पदशक्तिग्रहात् प्रबल इति स एवाभ्युपगम्यत इति भावः। तत्त्वकल्पनात्—अप्रामाणिकत्वकल्पनात्। वाक्यशक्ते-

२२. न च विशिष्टशक्त्यज्ञानेऽपि प्रागुक्तरीत्या शक्तिग्रहात् बोधे व्यभिचारः, त्वदुक्ततदग्रहेऽपि विशिष्टशक्तिग्रहमात्रेण बोधे तवापि व्यभिचारात्। विशिष्टशक्तिग्राहके नियमतस्तद्ग्राहकत्वस्यापि स्वीकारान्न दोष इति चेत्, तर्हि ममापि न दोषः। तथाहि—तदादिवत् कारक-

---

रावश्यकत्वमाह—**हरेऽवेति**। तत्र पदयोः स्पष्टमज्ञानेन तत्र शक्तिकल्पनाया असंभवात् वाक्य एव शक्तिरङ्गीकार्येति भावः।

२२. वाक्यशक्त्यङ्गीकारे व्यभिचारं शङ्कते—**न चेति**। **विशिष्टशक्त्यज्ञानेऽपीति** ; वाक्यशक्त्यज्ञानेऽपीत्यर्थः। **शक्तिग्रहादिति** ; पदे इत्यादिः। **व्यभिचार इति** ; शाब्दबोधं प्रति वाक्यशक्तिग्रहस्य हेतुत्वमिति कार्यकारणभावकल्पने पदशक्तिग्रहेणैव शाब्दबोधस्थले वाक्यशक्तिग्रहरूपकारणाभावात् व्यभिचार इत्यर्थः। समाधत्ते—**त्वदुक्तेत्यादिना**। **तदग्रहेऽपि** ; पदशक्त्यग्रहेऽपि। 'हरेऽव' इत्यादौ पृथक्पदज्ञानाभावेन पदशक्तेर्ज्ञातुमशक्यतया वाक्यशक्तिज्ञानेनैव तत्र बोधो वक्तव्यः। तथाच तत्र त्वदीयकार्यकारणभावस्य व्यभिचारः सम इत्यर्थः। परः स्वमते व्यभिचारं परिहरति—**विशिष्टेत्यादिना**। **विशिष्टशक्तिग्राहक इति** ; व्यवहारादाविति शेषः। **तद्ग्राहकत्वस्यापीति**। पदशक्तिग्राहकत्वस्यापीत्यर्थः। **न दोष इति** ; न व्यभिचार इत्यर्थः। अयं भावः—यद्यपि व्यवहारादिना शक्तिग्राहकशिरोमणिना प्रथमं वाक्य एव शक्तिर्गृह्यते, तथाप्यावापोद्वापाभ्यां पदे सा पर्यवस्यतीति। एवंच वाक्यशक्तेर्यो ग्राहको व्यवहारादिः, स एव पदशक्तेरपि ग्राहक इति पदशक्तिग्रहो नाप्रामाणिक इति। वाक्यशक्तिवादी तुल्यन्यायेन स्वमतेऽपि व्यभिचारमुद्धरति—**तर्हीत्यादिना**। **ममापि** ; वाक्यशक्तिवादिनो ममापि। तदेवोपपादयति—**तथाहीत्यादिना**। सामान्यतो बोधाङ्गीकारे दृष्टान्तमाह—**तदादिवदिति**। तच्छब्देन बुद्धिस्थत्वरूपेण यथा पदार्थानां सामान्यतो ग्रहः, तथेत्यर्थः।

विभक्तिविशिष्टपदधातुपदयोर्विशिष्टयोः कारकविशिष्टक्रियाबोधकत्वमिति सामान्यतः शक्तिग्रहे अनन्तरं पदविशेषसमभिव्याहारज्ञाने सति तात्पर्यवशात् पदार्थविशेषविशिष्टक्रियाबोध इत्यभ्युपगमेन त्वयापि समान्यतः कार्यकारणभावाङ्गीकारेण च तत्कार्यकारणभावग्राहकस्यैव नियमतो विशिष्टशक्तिग्राहकत्वस्वीकारादित्याहुः ।

---

कारकविभक्तयः कर्मत्वादिकारकबोधिका द्वितीयादिविभक्तयः । तद्विशिष्टं पदं गामित्यादि पदम् । तथा धातुपदं धातुप्रकृतिकं पदम्, आनयेत्यादिकम् । तयोरित्यर्थः । अत्र यद्यपि कारकविभक्तिविशिष्टेति विशेषणांशो धातुपदेऽप्यन्वेतुं शक्यते, कर्तृकर्मणोर्विहितानां तिङामपि विभक्तिसंज्ञानपायेन तदन्तत्वात् आनयेत्यादेः । "विभक्तिश्च" (पा. १-४-१०४) इति सूत्रे हि "तिङस्त्रीणि" (पा. १-४-१०१) इत्यतस्तिङ्ग्रहणं व्यवहितमपि स्वरितत्वप्रतिज्ञाबलादनुवर्तत इति व्याख्यातृभिराख्यातम् । तत्फलं तु 'नमामः' इयादौ "न विभक्तौ तुस्माः" (पा. १-३-४) इति सकारस्येत्संज्ञानिषेधः । तथापि 'रामेणास्यते' इत्यादौ भावाख्यातस्थले कारकविभक्तिविरहात् तत्संग्रहो न स्यादिति भिया तथा न व्याख्यातमिति बोध्यम् । **विशिष्टयोरिति** ; कारकविशिष्टक्रियाबोधकत्वेन परस्परमन्वितयोरित्यर्थः । **कारकविशिष्टेति** ; "भावप्रधानमाख्यातम्" (यास्कः, १-१) इति यास्कनिरुक्तानुसारिण्या व्युत्पत्त्या भावप्रधानो बोध इति भावः । भूवादिसूत्रस्थभाष्यादपि भावप्रधान एव बोधः फलति । तथाहि तत्रत्यं भाष्यम्—"का तर्हीयं वाचोयुक्तिः—भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीदिति । सैषा वाचोयुक्तिः—पचादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" (महाभाष्यम्, १-३१) इति । **सामान्यतः** ; गौः कर्मत्वमानयनमित्यादिकं विशेषमनपेक्ष्येत्यर्थः । **अनन्तरम्** ; सामान्यशक्तिग्रहानन्तरम् । **पदविशेषेत्यादि** ; गोपदाम्पदानयतिरूपविशेषेत्यर्थः । **क्रियाबोध इति** ; गोकर्मकमानयनमिति क्रियाबोध इत्यर्थः । **तत्कार्यकारणभावग्राहकस्यैवेति** ; सामान्यतः कार्यकारणभावग्राहकस्यैवेत्यर्थः ।

२३. तदपरे न क्षमन्ते ; 'घटम्' इत्येतावतापि घटकर्मत्वबोधदर्शनात् तस्य तत्र शक्तेरावश्यकत्वेन तयैव तद्बोधसंभवे पुनः समुदायशक्तेरपि तद्विषयकत्वकल्पने मानाभावात्, पदार्थविशेषविशिष्टक्रियाबोधाय पदशक्तेस्तवाप्यावश्यकत्वाच्च। कारकत्वविभक्तित्वधातुत्वाद्यजानतां तथा शक्तिग्रहा-

---

२३. एवं वाक्यशक्तिस्वीकारे संभाविता दोषाः परिहृताः। तद्घटकपदानामपि शक्तिरस्त्येवेति चोपन्यस्तम्। तत्रैव मतान्तरमाह—**तदित्यादिना**। घटमित्येतावतापीत्येतावत्पदेन 'घटमानय' इत्यादिवाक्यघटकस्य घटमिति पदस्य व्यवच्छेदः। यत्र घटमिति केवलमेकमेव पदं प्रयुज्यते तावतापीत्यर्थः। **बोधदर्शनेनेति**; यत्र क्रियापदं विना कारकपदमात्रं प्रयुज्यते तत्र योग्यक्रियां क्रियासामान्यं वाध्याहृत्य कारकविभक्तेः साधुत्वोपपत्तिरिति सिद्धान्तात् घटकर्मिका आनयनादिक्रिया इत्यादिरीत्या बोधस्य दर्शनादित्यर्थः। **तस्य**; घटमिति पदस्य। **तत्र**; घटकर्मत्वे। **आवश्यकत्वेनेति**; अन्यथा शक्त्या पदजन्यपदार्थोपस्थितिरूपकारणाभावेन शाब्दबोधो न स्यादित्यर्थः। **तयैव**; पदशक्त्यैव। **तद्बोधसंभवे**; घटकर्मत्वबोधसंभवे। **समुदायशक्तेः**; 'घटमानय' इति वाक्यशक्तः। **तद्विषयकत्वेति**; घटकर्मत्वरूपार्थविषयकत्वेत्यर्थः। **मानाभावादिति**; मानाधीना हि मेयसिद्धिः। 'अनन्यलभ्यः शब्दार्थः' इति न्यायमनुसृत्य शक्तिः कल्पनीया। अत्र च घटकर्मत्वरूपार्थस्य पदशक्त्यैव लाभात् तत्र वाक्यस्य शक्तिर्न कल्पनीयेति न तत्कल्पने मानमस्तीत्यर्थः। वाक्यशक्तिपक्षेऽपि पदविभागक्षमज्ञानवतां पदार्थविशेषबोधाय पदशक्तिः पूर्वस्मिन् पक्षे अङ्गीकृता ; तामेवाह—**पदार्थविशेषेत्यादिना**। **तवापि**; वाक्यशक्तिवादिनस्तवापि। वाक्यशक्तिज्ञानपुरःसरं पदशक्तिग्रहस्यासंभवमुपपादयति—**कारकेति**। पूर्वस्मिन् पक्षे कारकविभक्तिविशिष्टपदधातुपदयोः कारकविशिष्टक्रियायां सामान्यतः शक्तिग्रह उपन्यस्तः। स चात्र न संभवति। कारकत्वविभक्तित्वादिज्ञानरहितानां तादृशशक्तिग्रहासंभवादिति

संभावाच्च। तस्मात् यस्य यथा शक्तिग्राहः, तस्य तत एव बोधः। अव्यवहितोत्तरत्वादिनिवेशेन च कार्यकारणभावे व्यभिचारपरिहारः।

वाक्यशक्तिग्रहोऽपि कस्यचित् विशिष्यैव, कस्यचित् कारकत्वादि जानतः प्रागुक्तरीत्यैव सामान्यतः, कस्यचित् प्रकारान्तरेणैवेत्य-

---

भावः। अस्मिन् पक्षे निर्गलितमर्थमाह—**तस्मादित्यादिना**। **यस्य यथेति**; यस्य पुरुषस्य घटमित्यादिपदात् विशिष्य शक्तिग्रहो जातः, तस्य पदशक्त्यैव शाब्दबोधः। यस्य तु न तथा, तस्य वाक्यशक्त्यैव शाब्दबोध इत्यङ्गीकरणीयमिति भावः। नन्वेवं व्यभिचारः प्रसज्येत; तथाहि—विशिष्टशाब्दबुद्धिं प्रति किं वाक्यशक्तिग्रहः कारणम्? उत पदशक्तिग्रहः? नाद्यः, भवदुक्तनिर्गलितार्थरीत्या पदशक्त्यैव तत्र बोधस्याङ्गीकारात् वाक्यशक्तिग्रहाभावेन कार्यकारणभावव्यभिचारात्। नान्त्यः, तयैव रीत्या वाक्यशक्त्यैव बोधस्याङ्गीकारादित्याक्षिप्य समाधत्ते—**अव्यवहितेत्यादिना**। यत्र पदशक्तिग्रहाव्यवहितोत्तरं वाक्यार्थबोध उत्पद्यते तत्र पदशक्तिग्रहः कारणम्। यत्र तु वाक्यशक्तिग्रहाव्यवहितोत्तरं स उत्पद्यते तत्र वाक्यशक्तिग्रहः कारणमिति कार्यकारणभावपरिकल्पनान्न व्यभिचार इत्यर्थः। न चैवं कार्यकारणभावद्वयकल्पने गौरवमिति शङ्क्यम्, प्रामाणिकगौरवस्यादोषत्वात्।

तस्मादित्यादिनोक्तं निर्गलितार्थमेव स्पष्टप्रतिपत्तये विशदयति—**वाक्यशक्तिग्रहोऽपीत्यादिना**। **कस्यचित्**; विशिष्य ज्ञानवतः कारकत्वविभक्तित्वधातुत्वाद्यजानतश्च पुरुषस्य। **विशिष्यैव**; तत्तद्वाक्यस्य तत्तद्वाक्यार्थे शक्तिरित्यर्थः। अत एव समुदायतो विशिष्टवाक्यार्थबोधेऽपि पदविभागसामर्थ्याभावस्तेषां दृश्यते। **कस्यचित्**; व्याकरणव्युत्पन्नस्य। **कारकत्वादीति**; आदिना विभक्तित्वधातुत्वक्रियात्वादेः संग्रहः। **प्रागुक्तरीत्यैव**; तदादिवदित्यादिना पूर्वोक्तप्रकारेणैव। **सामान्यतः**; अनन्तरं तु पदविशेषसमभिव्याहारज्ञाने सति

नियत एव। स च तत्तत्पदार्थनिष्ठप्रकारतानिरूपिता तत्तत्पदार्थनिष्ठविशे-ष्यतानिरूपिता च या सांसर्गिकी विषयता तदाश्रयतत्तदर्थे समुदायः शक्त इत्येवं विशेषणविशेष्यभावापन्नार्थ एव। एतेन स्वतन्त्रशक्तिज्ञानात् विशृङ्ख-लपदार्थोपस्थितौ सत्यां विशेषणविशेष्यभावव्यत्यासेनान्वयः स्यादित्य-पास्तम्। जातिशक्तिवादे संसर्गवृत्तिधर्म एव वाक्यस्यापि शक्यो बोध्यः।

२४ यत्तु—विशिष्टशक्तिग्रहे पदशक्तिग्रहः कारणम्, प्रत्येक-पदशक्तिग्रहाभावे वाक्यार्थबोधस्याजायमानत्वात्, तत्सत्त्वे अपूर्ववाक्य-

---

तात्पर्यवशात् पदार्थविशेषविशिष्टक्रियाबोधो जायत इति भावः। ननु सामान्यशक्तिग्रहानन्तरं स्वतन्त्रपदशक्तिज्ञानात् विशकलितपदार्थोपस्थितौ सत्यां विशेषणविशेष्यभावव्यत्यासेनाप्यन्वयबोधः स्यादित्यत्राह—**स चेति**; सामान्यतः शक्तिग्रहश्चेत्यर्थः। **तत्तत्पदार्थनिष्ठप्रकारतानिरूपितेति**; ‘घटमानय’ इत्यत्र घट-पदार्थनिष्ठप्रकारतानिरूपिता आनयनपदार्थनिष्ठविशेष्यतानिरूपिता च या विषयता **तदाश्रयतत्तदर्थे** घटरूपार्थे आनयनरूपार्थे च **समुदायः** घटमानयेति समुदायः शक्त इति परस्परं विशेषणविशेष्यभावापन्नार्थ एव शक्तिग्रहात् न व्यत्यासेना-न्वयप्रसक्तिरित्यर्थः। **विशृङ्खलेति**; विशकलितेत्यर्थः। सांसर्गिकविषयतायाः शाब्दबोधे भाने उपपत्तिमाह—**जातीत्यादि**।

२४. मतान्तरं निराकर्तुमनुवदति—**यत्त्वित्यादिना**। **विशिष्टशक्तिग्रह इति**; वाक्यशक्तिग्रह इत्यर्थः। **कारणमिति**; प्रत्येकपदशक्तिग्रहाभावे वाक्यार्थ-बोधस्याजायमानत्वात् प्रत्येकपदशक्तिग्रहे वाक्यार्थबोधस्य जायमानत्वाच्चान्वय-व्यतिरेकानुविधायिनी पदशक्तिग्रहवाक्यशक्तिग्रहयोः कार्यकारणभावपरिकल्पने-त्यर्थः। तत्र युक्त्यन्तरमप्याह—**तत्सत्त्व इति**। पदशक्तिग्रहसत्त्व इत्यर्थः। **अपूर्ववाक्येति**; ‘घटमपनय’ इति वाक्यश्रवणे घटापनयनरूपवाक्यार्थबोधो

श्रवणेऽपि तस्य जायमानत्वाच्चेति ; तदसारम्, वाक्यशक्त्यग्रहे तदभावादेवाद्ये तदभावोपपत्तेः । तत्सत्त्वे तु जायत एव । अत एव समुदायव्युत्पत्त्या समुदायार्थबोधेऽपि व्याकरणव्युत्पत्तिं विना पदविभागसामर्थ्याभावोऽनुभवसिद्धः संगच्छत इत्याहुः । न च वाक्यशक्त्यङ्गीकारे समभिव्याहारानन्त्येन गौरवम्, प्रामाणिकत्वात् ; तवापि तावत्कार्यकारणभावावश्यकत्वाच्च ।

---

जायते । पूर्वं घटमिति पदस्य शक्तिग्रहाभावे स न संगच्छते । अतः 'घटमानय' इति वाक्यस्थस्य घटमिति पदस्य शक्तिग्रहः पृथगङ्गीकरणीय इति भावः । येन घटमिति पदस्यार्थो न ज्ञातः तस्य 'घटमानय' इति वाक्यश्रवणेऽपि बोधो न जायते । अतः पृथक्पदानां शक्तिग्रह आवश्यक इत्यभिसन्धिः । समाधत्ते— **तदसारमिति** । यस्य पुरुषस्य 'घटमानय' इति वाक्यश्रवणेऽपि बोधो न जायते तस्य पुरुषस्य 'घटमानय' इति वाक्यशक्तिग्रहो न जातः । अतस्तस्य न बोध इत्युपपत्तिसौष्ठवात् पदशक्तिग्रहस्य कारणत्वकल्पने तन्नालमिति भावः । **तदभावादेव** ; विशिष्टशक्त्यभावादेव । **आद्ये** ; वाक्यार्थबोधाभावस्थले । **तदभावोपपत्तेः** ; वाक्यार्थबोधाभावोपपत्तेः । **तत्सत्त्वे तु**—वाक्यशक्तिग्रहसत्त्वे तु । **जायत एवेति** ; वाक्यार्थबोध इति शेषः । **अत एव** ; वाक्यशक्तिग्रहे पदशक्तिग्रहस्याकारणत्वादेव । **संगच्छत इति** ; यो हि व्याकरणव्युत्पत्तिरहितः सोऽपि 'हरेऽव' इति वाक्यस्य हरिकर्तृकावनमर्थं जानाति । परं तु हरे इत्यस्य हरिरर्थः, अवेतिपदस्यावनमर्थ इति न जानाति, अवेति पदच्छेदज्ञानस्यैवाभावात् । यदि पदशक्तिज्ञानमन्तरा न वाक्यशक्तिज्ञानमित्युच्यते तदात्र पदज्ञानाभावेन पदशक्तिज्ञानं नास्ति, ततो वाक्यशक्तिज्ञानमपि नास्तीति वाक्यार्थबोधो न संगच्छेतेति भावः । **समभिव्याहारानन्त्येनेति** ; पदानां समभिव्याहारस्य कामचारत्वेन तदानन्त्यमिति भावः । समाधत्ते—**प्रामाणिकत्वादिति** । प्रामाणिकं गौरवं सोढव्यमेवेति भावः । **तवापीति** ; पदशक्तिग्रहस्य

२९. ननु—घटप्रकारकशाब्दबोधमात्रे घटार्थकपदोत्तरसार्थकप्रत्ययनिपातान्यतरजन्योपस्थितिर्हेतुः । एवं विशेष्यतासंबन्धेन कर्मत्वविषयकशाब्दबोधमात्रे कर्मत्वार्थकाम्प्रत्ययप्रकृतिजन्योपस्थितिर्हेतुरिति सा-

---

कारणत्ववादिनस्तवापि कार्यकारणभावबहुत्वकल्पनमावश्यकमित्यर्थः । अन्विताभिधानवादो हि सिद्धान्तिसंमतः । तत्र पदानामितरपदार्थान्वितस्वार्थेषु शक्तिर्वक्तव्या । घटमानयेत्यत्र घटपदस्यानयनक्रियान्विते घटे शक्तिः । 'घटमपनय' इत्यत्रापनयनक्रियान्विते घटे शक्तिः । 'घटं पश्य' इत्यत्र दर्शनक्रियान्विते घटे शक्तिरित्येवं रीत्या शक्यानन्त्यात् तत्तत्पदशक्तिग्रहस्य तत्तद्वाक्यशक्तिग्रहे कारणत्वमिति कार्यकारणभावानन्त्यमवश्यमङ्गीकर्तव्यमित्यर्थः । यदि तत्र प्रामाणिकत्वान्न गौरवं दोषायेति मतं तदत्रापि सममिति भावः ।

२९. पूर्वं 'तदादिवत् कारकविभक्तिविशिष्टपदधातुपदयोर्विशिष्टयोः कारकविशिष्टक्रियाबोधकत्वम्' इति सामान्यतः शक्तिग्रहमुपपाद्य 'त्वयापि सामान्यतः कार्यकारणभावाङ्गीकारेण च' इति परेषामपि सामान्यतः कार्यकारणभावाङ्गीकार उक्तः । तत्र परः सामान्यतः कार्यकारणभावग्रहे वैषम्यमुपपादयति —**नन्वित्यादिना** । **शाब्दबोधमात्र इति**; शाब्दबोधसामान्य इत्यर्थः, "मात्रं कार्त्स्न्येऽवधारणे" (नामलिङ्गा. ३-३-१७८) इति कोशात् । **घटार्थकपदेति**; घटपदेत्यनुक्त्वा घटार्थकपदेत्युक्तिः पर्यायानां कलशादीनां ग्रहणार्थम् । **सार्थकप्रत्ययनिपातेति**; स्वार्थिकप्रत्ययेषु निरर्थकनिपातेषु च प्रयुक्तेषु घटप्रकारकबोधाभावात् व्यभिचारनिरासाय सार्थकेत्यादि विशेषणम् । एवंच घटप्रकारकशाब्दबुद्धिं प्रति घटमित्यम्प्रत्ययजन्योपस्थितिर्हेतुः, घटश्चेति समुच्चयार्थकचशब्दरूपनिपातजन्योपस्थितिर्हेतुरित्युक्तं भवति । अनेन घटप्रकारकशाब्दबुद्धिं प्रति हेतुरुपन्यस्तः । अधुना कर्मत्वविशेष्यकशाब्दबुद्धिं प्रति हेतुर्बुद्धिवैशद्यायोच्यते—**एवमिति** । **शाब्दबोधमात्र इति**; अत्रापि मात्रशब्दः कार्त्स्न्यार्थकः । **कर्मत्वार्थकेत्यादि**; कर्मत्वार्थको योऽयम् अम्प्रत्ययः, तस्य या प्रकृतिः घटशब्दादिः, तज्जन्योपस्थि-

मान्यतः कार्यकारणभावः । न च घटः कर्मत्वमित्यतो विपरीतव्युत्पन्नस्य तथा बोधात् व्यभिचारः, घटबोधकपदोत्तरपदजन्यज्ञानत्वेन कर्मत्वबोधकपदप्राग्वर्तिपदजन्यज्ञानत्वेन च हेतुत्वाददोषात् । न चैवमपि पटादिलाक्षणिकघटपदघटितात् 'घटमानय' इति वाक्यात् तथा बोधवारणाय घटबोध-

---

र्तिर्हेतुरित्यर्थः । एवंच कर्मत्वविशेष्यकशाब्दबुद्धिं प्रति अम्प्रत्ययप्रकृतिघटादिशब्दजन्योपस्थितिर्हेतुरित्यर्थः । अत्र कर्मत्वार्थकाम्प्रत्ययप्रकृतीति समुच्चयार्थकनिपातसहचरितशब्दोपलक्षणं द्रष्टव्यम् । एवं चास्मत्संमतः सामान्यतः कार्यकारणभावः पदविषयक एव, न तु भवदुक्तरीत्या वाक्यविषयक इति वैषम्यमिति भावः । उक्ते कार्यकारणभावे व्यभिचारमाशङ्कते—**न चेति घटः कर्मत्वमिति ;** अम् प्रत्ययस्थाने कर्मत्वपदं प्रयुज्यते । **विपरीतव्युत्पन्नस्येति ;** घटमिति पदे व्युत्पन्नः क्रमव्युत्पन्नः । घटः कर्मत्वमित्यत्र व्युत्पन्नस्तु विपरीतव्युत्पन्न इति बोध्यम् । **तथा बोधादिति ;** घटप्रकारककर्मत्वविशेष्यकबोधादित्यर्थः । **व्यभिचार इति ;** प्रत्ययप्रयोगाभावात् पूर्वोक्तकार्यकारणभावस्य व्यभिचार इत्यर्थः । समाधत्ते—**घटबोधकेत्यादि** । पूर्वोक्तकार्यकारणभावप्रतिपादकवाक्ये प्रत्ययग्रहणमपनीय पदग्रहणं क्रियते । एवं चाम्प्रत्ययवत् कर्मत्वमित्यपि पदमेव । अतो घटबोधकं यत् पदं घटेत्याकारकं, तदुत्तरवर्ति यत् पदम् अम्प्रत्ययः कर्मत्वमिति च, तज्जन्यज्ञानत्वेन रूपेण कार्यकारणभावः कल्प्यत इत्यर्थः । एवं कर्मत्वबोधकं पदम् अम्प्रत्ययः कर्मत्वमिति च, तत्प्राग्वर्ति पदं घटेत्याकारकम् , तज्जन्यज्ञानत्वेन कार्यकारणभाव इत्यर्थः । अत्रोभयत्रापि पदशब्दो वाचकपरः, न तु वैयाकरणपरिभाषितः सुप्तिङन्तरूपः । पूर्वोक्तकार्यकारणभावे परोऽनुपपत्तिमाशङ्कते—**न चैवमपीति** । **एवमपि ;** पूर्वोक्तरीत्या प्रत्ययशब्दस्थाने पदशब्दं निवेश्य व्यभिचारवारणेऽपि । **पटादिलाक्षणिकेति ;** यत्र घटपदस्य लक्षणया पटबोधकत्वमभिप्रेत्य पटानयनबुबोधयिषया 'घट-

कत्वं घटबोधफलोपहितत्वं निवेश्यम्; एवं चान्योन्याश्रयात् तादृशकार्य-कारणभावग्रहासंभव इति वाच्यम्; तत्र घटस्य वृत्तिजन्योपस्थित्यभावादेव तथा बोधवारणेन स्वरूपयोग्यत्वनिवेशेऽपि क्षत्यभावादिति चेत्—न, 'कर्मत्वं घटः, अम् घटः' इत्येतादृशसमभिव्याहारव्युत्पन्नानां ततस्तथा बोधे

---

मानय' इति वाक्यं प्रयुज्यते, तत्र घटकर्मकानयनबोधवारणाय पूर्वोक्तकार्यकारण-भाववाक्ये घटबोधकेतिपदस्य वस्तुतो यत् घटं बोधयति, न तु लक्षणादिना पटमित्यर्थो वक्तव्यः। एवं च घटबोधकत्वं न स्वरूपयोग्यतया, किंतु वस्तुतः फलोपहिततयेति वक्तव्यम्। ततश्च कार्यकारणभावग्रहानन्तरं घटबोधकत्व-ज्ञानम्; कार्यकारणभावग्रहश्च तत्प्रतिपादकवाक्यघटकघटबोधकत्वग्रहानन्तरमिति परस्पराश्रयणात् स एव दोष इति भावः। समाधत्ते—**तत्रेति**। पटलाक्षणिकघट-पदप्रयोग इत्यर्थः। **वृत्तिजन्योपस्थित्यभावेनेति**; घटादिपदात् यथाकथंचिदु-पस्थितानामाकाशादीनां शाब्दबोधे भानवारणाय शाब्दबुद्धिं प्रति वृत्त्या पदजन्य-पदार्थोपस्थितिः कारणमिति वक्तव्यम्। तथा च सति पटलाक्षणिकघटपदप्रयोगे घटरूपार्थस्य न वृत्त्योपस्थितिरिति न दोषः। अतश्च पूर्वोक्तकार्यकारणभावे न दोषः। एवं घटबोधकेति कार्यकारणभाववाक्यस्थे पदे घटबोधनस्वरूप-योग्यतैव विवक्षिता, न तु फलोपधानमपीति नान्योन्याश्रयदोष इति भावः। एवं नन्वित्यादिना शङ्कितमर्थं प्रतिक्षिपति—**नेति**। घटमित्यत्र घटः कर्मत्वमित्यत्र च प्रकृतिप्रत्ययार्थबोधकयोः पूर्वापरभावो दृष्ट इति कृत्वा तयोः पौर्वापर्यमन्तर्भाव्य कार्यकारणभाववाक्यं परिष्कृतम्। 'अम् घटः, कर्मत्वं घटः' इत्यादौ तु प्रकृति-प्रत्ययार्थबोधकयोः पौर्वापर्यव्यत्यासो दृश्यते। अतः पूर्वोक्तकार्यकारणभावस्यात्र व्यभिचारात् स न संगत इति भावः। 'अम् घटः' इत्यादौ शाब्दबोधस्तु केषांचिदनुभवसिद्धो नापलापार्हः। यद्यपलप्येत सद्व्युत्पन्नासद्व्युत्पन्नभेदेन व्युत्पन्नद्वैविध्यं संप्रतिपन्नमसंगतं स्यादित्यर्थः। 'कर्मत्वं घटः' इत्यादौ दोषनि-

व्यभिचारात्; सद्व्युत्पन्नासद्व्युत्पन्नविभागोच्छेदापत्तेश्च। न च तादृशहेतुताज्ञानस्यापि कारणत्वान्न दोष इति वाच्यम्, सामान्यविधज्ञानस्यापि सत्त्वात्। न च तत्तद्व्युत्पत्तिविशिष्टशाब्दबोधे तत्तद्व्युत्पत्तिर्हेतुः; तद्धीजनकज्ञानं च व्युत्पत्तिः; व्युत्पत्तिवैशिष्ट्यं च स्वाव्यवहितोत्तरोत्पत्तिकत्वस्वसामानाधिकरण्योभयसंबन्धेनेति न दोष इति वाच्यम्; अनन्तकार्यकारणभावतादवस्थ्यात्; प्रत्ययत्वनिपातत्वाद्यजानतस्तथा कार्यकारणभावग्रहासंभवाच्च। निरूपकत्वादिसंबन्धरूपवाक्यार्थस्यैकत्वात् तद्रूप-

---

वारणं शङ्कते—**न चेति**। **तादृशहेतुतेति**; 'अम् घटः, कर्मत्वं घटः' इत्यादिसमभिव्याहारापन्नपदानामपि बोधहेतुत्वज्ञानस्येत्यर्थः। विनिगमनाविरहेण पूर्वं मदुक्तसामान्यप्रकारेण कार्यकारणभावज्ञानस्यापि कारणत्वमङ्गीक्रियतामिति भावः। परस्तु यथाकथंचित् स्वमतं साधयितुमभिलषन् सिद्धान्त्युक्तेन सामान्यतो वाक्यशक्तिग्रहेण सह स्वोक्तशक्तिग्रहप्रकाराणामपि बोधहेतुत्वमाशङ्कते— **न चेति**। तत्तदिति स्वोक्तानां सिद्धान्त्युक्तानां च संग्रहः। यदि भिन्नभिन्नानां शक्तिग्रहप्रकाराणां हेतुत्वं, तदा व्यभिचारः स्यादित्याशङ्क्य तं परिहरति—**स्वाव्यवहितेत्यादि**। प्रकारान्तरेण शाब्दबोधे व्यभिचारवारणायाद्यम्। यो यः शाब्दबोधः यस्य यस्य शक्तिग्रहस्याव्यहितोत्तरकाल उत्पद्यते, तस्मिंस्तस्मिन् शाब्दबोधे स स शक्तिग्रहः कारणमित्यर्थः। पुरुषान्तरोत्पन्नेन शक्तिग्रहेण पुरुषान्तरे बोधवारणाय स्वसामानाधिकरण्येति। तन्निराकरोति—**अनन्तेति**। दोषान्तरमाह—**प्रत्ययत्वेत्यादि**। कार्यकारणभाववाक्यघटकानि प्रत्ययत्वनिपातत्वादीनि येनागृहीतानि तस्य कार्यकारणभावग्रहो न भवेदित्यर्थः। भवति च लोके प्रत्ययत्वाद्यजानतोऽप्यवैयाकरणस्य बोधः। सिद्धान्तमाह—**निरूपकत्वादीति**। संसर्ग-

वाक्यार्थविषया तद्बोधकसर्ववाक्येष्वेकैव शक्तिः, कार्यस्यैकत्वात्; पर्या-येष्विव। 'घटमानय' इत्यतः पटकर्मकबोधाभावस्तु पटस्य पदानुपस्थिते-रित्यपि वदन्ति।

२६. नन्वस्तु वाक्ये तद्बोधकतयेच्छाविषयत्वादि; परं तु तस्य वृत्तित्वे किं मानमिति चेत्, विनिगमनाविरहः कार्यकारणभावलाघवं चेति

---

रूपवाक्यार्थस्यैकत्वात् तद्विषयिणी वाक्यनिष्ठा शक्तिरेकैवेत्यर्थः। **पर्यायेष्विवेति**; यथा पर्यायेषु शब्देषु न पृथक् पृथक् शक्तिः, तथा वाक्येष्वपीत्यर्थः। यदि सर्वेषु वाक्येष्वेकैव शक्तिः, तदा 'घटमानय' इति वाक्यात् पटकर्मकबोधः स्यात्, 'पटमानय' इति वाक्यस्थशक्तेः 'घटमानय' इति वाक्यस्थशक्तेश्चैकत्वादित्याशङ्क्य समाधत्ते--**घटमानयेत्यत** इति।

२६. नैयायिक आशङ्कते—**नन्विति**। अस्त्वित्यर्धाङ्गीकारे; बोधक-त्वस्याङ्गीकारात् वृत्तिमत्त्वस्यानङ्गीकारात्। न वयं वाक्यस्य बोधकत्वं व्यासेधामः, बोधकत्वाभावे "दश दाडिमानि षडपूपाः कुण्डमजाजिनं पलल-पिण्डः, अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः" (महाभाष्यम् १-२-४९) इत्यादिवाक्यवत् सर्वस्यापि वाक्यस्य निरर्थकत्वापातात्। अपि तु वाक्यस्य शक्तिमत्त्वं निषेधाम इति भावः। **तद्बोधकतायाः**; वाक्यार्थबोधकतायाः। वाक्यार्थस्य संसर्गविधया भानाङ्गीकारेण तद्बोधकत्वं वाक्यस्यास्त्येवेति भावः। न हि पदसमूहरूपवाक्यप्रयोगाभावे वाक्यार्थस्य संसर्गविधयापि भानमस्ति। अतो वाक्यस्य वाक्यार्थबोधकत्वमिष्टमेव। परं तु वाक्यार्थबोधकत्वं नाम यत् न सा वृत्तिः, न वा ततो वाक्यस्य वृत्तिमत्त्वमिति भावः। **किं मानमिति**; न किमपीत्यर्थः। एवं च मानाभावात् न वाक्यशक्तिरित्यर्थः। समाधत्ते—**विनिग-मनाविरह इति**; मानमिति शेषः। 'घटमानय' इति वाक्ये समुच्चारिते घटकर्म-कानयनरूपोऽर्थः प्रतीयते। तत्र किं वाक्यशक्तिर्हेतुः, उत पदशक्तिरिति प्रश्ने

गृहाण । तथाहि—मन्मते तद्धर्मावच्छिन्नतद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नतन्निरूपितवृत्तिविशिष्टज्ञानं हेतुरित्येक एव कार्यकारणभावः । तव तु सांसर्गिकविषयताशालितद्विषयकशाब्दबुद्धावाकाङ्क्षाज्ञानकार्यकारणभावोऽधिकः । वृत्तिज्ञानकार्यकारणभावे च प्रकारताविशेष्यतयोर्वि-

---

पदशक्तिरेवेति भवदुक्तेः किं विनिगमकम् ? न किमपि। अतो वाक्यशक्तिरेवास्त्विवति भावः। ननु पदार्थज्ञानाभावे वाक्यार्थज्ञानस्याजायमानतया पदार्थज्ञानं तदुपयोगितया पूर्वभाव्यवश्यं वक्तव्यम् । तच्च पदशक्तिज्ञानमन्तरा न संभवतीति पदशक्तिरेव हेतुरित्यस्ति विनिगमकमिति चेत् , तर्हि 'हरेऽव' इत्यादौ पदविभागज्ञानविधुरस्यावैयाकरणस्य बोधो न स्यात् , पदज्ञानाभावेन पदशक्तिज्ञानस्यासंभवात् । 'भवति भिक्षां देहि' इति बालोच्चारितेन वाक्येन व्याकरणज्ञानगन्धशून्याया गृहिण्या भिक्षायाचनरूपवाक्यार्थबोधो न स्यात् । ततश्च भिक्षादाने सा न प्रवर्तेत । अतो न सर्वत्र वाक्यार्थावबोधे पदशक्तिज्ञानस्य हेतुत्वमिति वक्तुं शक्यम् । तस्मात् वाक्यशक्तिरपि स्वीकार्येति भावः । हेत्वन्तरमाह—**कार्यकारणभावेति** । वाक्यशक्तिस्वीकार एव वृत्तिज्ञानशाब्दबोधयोः कार्यकारणभावोपपादने लाघवं भवति ; नान्यथेत्यर्थः । तदेवोपपादयति—**तथाहीति** । **मन्मते** ; वाक्यशक्त्यङ्गीकारिणो वैयाकरणस्य मते । **तद्धर्मावच्छिन्नेत्यादि** ; घटत्वावच्छिन्नघटविषयकशाब्दबुद्धिं प्रति घटत्वावच्छिन्नघटनिरूपितवृत्तिविशिष्टज्ञानं हेतुः। अयं च कार्यकारणभावः पदशक्तिग्रह इव वाक्यशक्तिग्रहेऽप्युपपद्यत इत्येक एवास्माकं कार्यकारणभावः कल्पनीयः । नैयायिकानां तु पदार्थबोधस्थले घटत्वप्रकारकघटविशेष्यकशाब्दबुद्धिं प्रति घटत्वप्रकारकघटविशेष्यकशक्तिज्ञानं कारणमित्येकः कार्यकारणभावः । अपरश्च वाक्यार्थबोधस्थल इति गौरवमवर्जनीयमिति भावः। तदेवाह—**तव त्विति** ; वाक्यशक्त्यनङ्गीकर्तुस्तवेत्यर्थः । **सांसर्गिकेति** ; तेषां मते वाक्यार्थस्य संसर्गमर्यादया भानाङ्गीकारात् सांसर्गिकविषयताशालिवाक्यार्थ-

शिष्य निवेश इत्यपरं च गौरवम् । विशेषणविशेष्यभावव्यत्यासेन गृहीतशक्तिकात् घटपदात् घटत्वविशिष्टघटबोधवारणाय तद्धर्मावच्छिन्नेति । तद्वृत्तिवैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्वाश्रयविषय-

---

विषयकशाब्दबुद्धिं प्रति आकाङ्क्षाज्ञानं कारणमिति पृथक् कार्यकारणभावो वक्तव्य इत्यर्थः । आकाङ्क्षेत्युपलक्षणम्—योग्यतासत्त्यादीनामपि ज्ञानं कारणमिति वक्तव्यमित्यर्थः । पदशक्तिज्ञानपदार्थबोधयोः कार्यकारणभावे प्रकारताविशेष्यते विशिष्य निवेशनीये । अन्यथा घटत्वप्रकारकघटविशेष्यकशाब्दबुद्धिं प्रति घटप्रकारकघटत्वविशेष्यकशक्तिज्ञानमपि हेतुर्भवेत् । इदमपरं च गौरवमित्यर्थः । स्वमते प्रकारताविशेष्यतयोर्विशिष्यानिवेशमाह—**विशेषणविशेष्यभावेति** । **व्यत्यासेनेति**; 'घटपदं घटावच्छिन्नघटत्वे शक्तम्' इति घटघटत्वयोर्विशेषणविशेष्यभाववैपरीत्येनेत्यर्थः । तन्निवेशे तु समानप्रकारकत्वलाभान्न दोष इति भावः । किं च घटपदादाकाशादीनां बोधव्यावृत्तिरपि प्रयोजनमवगन्तव्यम् । शब्दसामान्यस्याकाशगुणत्वात् आकाशोपस्थितावपि आकाशत्वावच्छिन्ननिरूपितवृत्तेर्घटपदे अभावात् न तद्बोधः । एतेनाकाशादीनां बोधवारणाय शाब्दबोधे वृत्तिग्रहजन्योपस्थितिर्हेतुरिति कार्यकारणभावे नैयायिकानां प्रवादो विफल इति भावः । ननु विषयितासंबन्धेन वृत्तिविशिष्टज्ञानस्य शाब्दबोधं प्रति हेतुत्वे विस्मृतवृत्तिकस्य तत्तद्वाचकपदज्ञानरहितस्य च बोधापत्तिरित्यत्राह—**तद्वृत्तिवैशिष्ट्यं चेति** । स्वपदमुभयत्रापि वृत्तिपरम् । प्रथमविशेषणेन विस्मृतवृत्तिकव्यावृत्तिः । द्वितीयविशेषणेन पदज्ञानरहितव्यावृत्तिः । एतदेवाह—**अत इति** । वृत्तिज्ञानस्य कारणत्ववचनात् अगृहीतशक्तिकव्युदासः । उद्बुद्धेत्यनेन विस्मृतवृत्तिकव्युदासः । अन्यविषयकोद्बुद्धसंस्कारसामानाधिकरण्येनातिप्रसङ्गवारणाय **स्वविषयकेति** । स्वाश्रयेत्यनेन पदज्ञानरहितव्युदासः । यत्किंचित्पदविषयकत्वेनातिप्रसङ्गनिरासाय स्वपदम् । स्वाश्रयेत्यत्र वृत्तिनियामकसंबन्धेनाश्रयो बोध्यः । तेन निरूपकत्वादिसंबन्धेनाश्रयमर्थान्तरमादाय नातिप्रसङ्गः । नन्वेवमपि यस्याः

कत्वोभयसंबन्धेन ज्ञाने बोद्धव्यम् । अतो नागृहीतवृत्तिकस्य बोधः, नापि पदाद्यज्ञानवत इत्याहुः ।

२७. अपरे तु अनन्तकार्यकारणभावेषु वृत्तिप्रवेशापेक्षया तत्पदादि-

---

शक्तेर्ग्रहात् संस्कारो नोत्पन्नः, तत्र स्वविषयकोद्बुद्धसंस्काराभावात् तत्सामानाधिकरण्येन वृत्तिवैशिष्ट्याभावात् शाब्दबोधो न स्यादिति चेत् ; अत्राहुः—संस्काराजनकशक्तिग्रहसत्त्वे, सत्त्वे वा तेन शाब्दबोधजनने च न मानमिति । ननु "स्वर्गकामो यजेत" इति श्रुत्या यागस्य स्वर्गसाधनत्वेऽवगते आशुतरविनाशिनो यागस्य चिरकालानन्तरभाविस्वर्गं प्रति कारणत्वान्यथानुपपत्त्या तत्र संस्कारस्य कल्पनेऽपि शाब्दबोधेऽनन्तरभाविनि संस्कारकल्पना किंनिबन्धनेति चेत्, वृत्तिज्ञानानन्तरं चिरभाविन्या वृत्तिस्मृत्यापि शाब्दबोधदर्शनात् तत्कल्पनेत्याहुः । अत्रेदं बोध्यम्—नैयायिकैः वृत्तिज्ञानपदज्ञानयोः शाब्दबोधे हेतुत्वमुच्यते । अत्र तु लाघवात् विशिष्टस्यैव तत्त्वमुच्यते । तत्रापि वृत्तिविषयकोद्बुद्धसंस्कारसमानाधिकरणवृत्त्याश्रयपदविषयकज्ञानस्य हेतुत्वे गौरवं स्यात् । अतः सामानाधिकरण्यादीनां संबन्धकोटौ निवेश आश्रित इति ।

२७. तद्धर्मावच्छिन्नेत्यादिना पूर्वोक्तकार्यकारणभावे गौरवं मत्वा कार्यकारणभावमन्यथा वर्णयतामपरेषां मतमाह—**अपरे त्विति** । **अनन्तकार्यकारणभावेष्विति** ; शृङ्गग्राहिकया प्रत्येकं कार्यकारणभावे वक्तव्ये सति तस्यानन्त्यमित्यर्थः । **वृत्तिप्रवेशेति** ; तद्धर्मावच्छिन्नतन्निरूपितवृत्तिविशिष्टज्ञानं हेतुरिति वृत्तिज्ञानप्रवेशेत्यर्थः । तथा च गौरवमिति भावः । **तत्पदादिज्ञानत्वेनेति** ; घटपदादिज्ञानत्वेनेत्यर्थः । आदिपदेन वाक्यसंग्रहः । एवं च घटत्वावच्छिन्नघटविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति घटपदज्ञानं कारणमिति रीत्या कार्यकारणभाव इत्यर्थः । एवंरीत्या कल्पने विशेषणविशेष्यभावव्यत्यासेनापि न बोधप्रसङ्ग

ज्ञानत्वेन हेतुतास्तु, तावतैव घटत्वपदात् घटबोधस्य वारणात्। वृत्तिज्ञानकार्यकारणभावस्तु विषयतया शाब्दे वृत्तिज्ञानं कारणमित्येक एव। 'दण्डी संयोगवान्' इत्यतो न संयोगसंसर्गको बोधः। परस्य तु वृत्तिज्ञानकार्यकारणभावे प्रकारताविशेष्यतान्यतरसंबन्धेनेत्येव निवेशात् गौरवम्। संसर्गबोधे आकाङ्क्षाज्ञानकार्यकारणभावकल्पनागौरवं च। न च वृत्तेः शक्तिलक्षणान्यतररूपतया कार्यकारणभावद्वयम्; तत्र व्यभिचारवारणायाव्यवहितोत्तरत्वनिवेश आवश्यक इत्येक एवेत्यसंगतमिति वाच्यम्; तवापि

---

इत्याह—**तावतैवेति**। तत्पदादिज्ञानत्वेन कार्यकारणभावकल्पनामात्रेणेत्यर्थः। एवकारेण कारणतांशेऽपि तद्धर्मावच्छिन्नतद्विषयकेति विशेषणांशं व्यवच्छिनत्ति। **घटत्वपदादिति**; घटत्वपदात् घटत्वविशेष्यक एव बोधो जायते, न तु घटत्वप्रकारक इति भावः। **घटबोधस्येति**; घटत्वप्रकारकघटविशेष्यकबोधस्येत्यर्थः। **वारणादिति**; घटत्वप्रकारकघटविशेष्यकबोधं प्रति घटपदज्ञानं कारणम्। न तु घटत्वपदज्ञानमित्यर्थः। तर्हि भवतां मते वृत्तिज्ञानशाब्दबोधयोः कार्यकारणभावो न संमतो वेत्याशङ्कायमाह—**वृत्तिज्ञानेत्यादि**। **कार्यकारणभाव इति**; वृत्तिज्ञानशाब्दबोधयोरित्यर्थः। **शाब्द इति**; शाब्दबुद्धावित्यर्थः। **एक एवेति**; अनेनास्मिन् पक्षे लाघवं दर्शितम्। **न संयोगसंसर्गक इति**; किं तु संयोगप्रकारक एवेत्यर्थः। **कार्यकारणभावद्वयमिति**; शक्तिज्ञानत्वेन क्वचित् कार्यकारणभावः, लक्षणाज्ञानत्वेन क्वचित् कार्यकारणभाव इति कार्यकारणभावद्वयस्य वक्तव्यत्वात् एक एवेति वचनं व्याहतमिति भावः। **व्यभिचारवारणायाव्यवहितोत्तरत्वनिवेश इति**; यदि विषयतया शाब्दबुद्धिं प्रति शक्तिज्ञानं कारणमित्युच्यते, तदा लक्षणाज्ञानजन्ये शाब्दबोधे व्यभिचारः। यदि लक्षणाज्ञानं कारणमित्युच्यते, तदा शक्तिज्ञानजन्ये शाब्दबोधे व्यभिचारः। अतस्तद्वारणायाव्यवहितोत्तरत्वं शाब्दबोधे निवेश्यमिति महत् गौरवमित्यर्थः। **तवापि**

समत्वात् । वस्तुतस्तु बोधकत्वातिरिक्ता लक्षणा नास्त्येवेत्याहुः । व्यक्ति-स्थानीयापत्तेरभावात् कार्यतावच्छेदकावच्छिन्नस्य जायमानत्वाच्च शाब्द-बुद्धित्वावच्छिन्ने शब्दज्ञानं कारणमिति पदादिज्ञानकार्यकारणभावोऽप्येक एवेत्याहुः । तदुभयमपि चिन्त्यम्, अगृहीतशक्तिकयत्किंचिद्विषयकशक्ति-ग्रहवतो बोधानापत्तेरित्यपरे ।

२८. एतेन—विशेष्यप्रकारसंसर्गसाधारणविषयतासत्त्वे मानाभावेन

---

**समत्वादिति**; तद्धर्मावच्छिन्नेत्यादिपूर्वोक्तरीत्या कार्यकारणभावं वदतस्तवापि वृत्ति-विशिष्टज्ञानमित्यत्र शक्तिविशिष्टज्ञानं वा लक्षणाविशिष्टज्ञानं वेति प्रश्ने त्वया-प्येवमेव वक्तव्यमिति समो दोषः; समश्च समाधिरावयोरित्यर्थः । तथाच "यत्रोभयोः समो दोषः परिहारोऽपि वा समः" (सांख्यसूत्रानिरुद्धवृत्तिः १-६) इति न्यायेन नाहं पर्यनुयोगार्ह इति भावः । एवं शक्त्यपेक्षया लक्षणाया अति-रिक्ततामभ्युपगम्य समाधानमुक्तम् । वस्तुतस्तु सैव नास्तीत्याह—**वस्तुतस्त्विति** । बोधकत्वमेव शक्तिरित्यङ्गीकारात् लक्षणाया अपि बोधकत्वात् शक्तित्वमेवाया-तमिति न शङ्कावसर इति भावः । ननु तवापि पदज्ञानत्वेन वाक्यज्ञानत्वेन च कार्यकारणभावद्वये गौरवमित्यतः प्रकारान्तरमाह—**शब्दज्ञानमिति** । दूषयति—**तदुभयमपीति** । **अगृहीतेत्यादि**; पदादिज्ञानं कारणं, शब्दज्ञानं कारणमिति वा कार्यकारणभावेऽङ्गीक्रियमाणे येन पदे शक्तिर्न गृहीता तस्य बोधः स्यात्, पदज्ञानस्य कारणस्य सत्त्वात् । एवं येन घटपदस्य पटे शक्तिर्गृहीता तस्य घटपदेन घटबोधापत्तिः, पदज्ञानस्य सत्त्वादित्यर्थः । तथाच पूर्वोक्त एव कार्यकारणभाव एष्टव्य इति भावः ।

२८. पूर्वं तद्धर्मावच्छिन्नतद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मा-वच्छिन्नतन्निरूपितवृत्तिविशिष्टज्ञानं हेतुरिति कार्यकारणभाव उक्तः । अत्र परेषामाक्षेपमुत्थाप्य निराकरोति—**एतेनेति** । **एतेन**; पूर्वोक्तरीत्या कार्यकारण

विशेष्यादित्रितयव्यवहारानुरोधेन विशेष्यतादित्रयस्यावश्यकत्वेन विषयतेति सामान्यशब्देन त्रय्या एवाभिधानसंभवाच्च विषयतात्रितयस्य कार्यकारणभावे निवेशापेक्षया द्वयोर्निवेश एव लाघवम्। ननु यद्यपि विषयता न विषयस्वरूपा, 'घटो विषयः' इत्यतो 'घटो घटस्वरूपवान्' इत्यत इव बोधानापत्तेः; अतीतानागतज्ञानादेर्विषयरूपविषयताविरहेण निर्विषयकत्व-

---

भावाङ्गीकारेण, वक्ष्यमाणहेतुनापीत्यर्थः। अस्य 'इति परास्तम्' इत्युत्तरत्रान्वयः। इत उत्तरं 'विशेष्यप्रकारसंसर्गसाधारणविषयतासत्त्वे' इत्यारभ्य 'कार्यकारणभावासंभवस्य तदवस्थत्वात्' इत्यन्तं परेषां मतस्यानुवादः। **विशेष्यप्रकारसंसर्गेति**; विशेष्यताप्रकारतासंसर्गतेत्यर्थः। **मानाभावेन, आवश्यकत्वेन, अभिधानसंभवाच्च**, इत्येतत्त्रयमपि विषयतात्रितयस्य निवेशे कारणम्। **विशेष्यतादित्रयस्येति**; विशेष्यता-प्रकारता-संसर्गतेति प्रातिस्विकरूपेण त्रयस्येत्यर्थः। विशेष्यतादित्रयसाधारणविषयताङ्गीकारपक्षमन्वारुह्यापि दोषमाह—**विषयतेति सामान्यशब्देनेति**। **निवेशापेक्षयेति**; प्रातिस्विकरूपेण विशेष्यतादीनां निवेशापेक्षयेत्यर्थः। **द्वयोरिति**; विशेष्यताप्रकारतयोरित्यर्थः। अत्र तटस्थः शङ्कते—**नन्विति**। अस्योत्तरत्र 'इति चेन्न' इत्यनेनान्वयः। का नाम विषयतेति प्रश्ने, न सा विषयस्वरूपा, किंतु ज्ञानस्वरूपेत्यङ्गीकारात् तादृशज्ञानसंबन्धेन शाब्दत्वमेव कार्यतावच्छेदकमित्यभ्युपगमे न गौरवमिति शङ्काया निर्गलितोऽर्थः। **न विषयस्वरूपा**; न घटादिविषयस्वरूपा। तत्र हेतुमाह—**घटो विषय इति**। यदि विषयता विषयस्वरूपा स्यात्, तदा 'घटो घटः' इत्युक्तं स्यात्; ततश्च बोधो न स्यादिति भावः। दोषान्तरमाह—**अतीतेति**। 'घटोऽभूत्, घटो भविष्यति' इति भूतभविष्यद्विषयकवर्तमानकालिकयोर्ज्ञानयोर्निर्विषयत्वं स्यात्, घटरूपविषयस्य वर्तमानत्वाभावात्। न चेष्टा-

प्रसङ्गाच्च; घटत्वादिना निर्णयविषयो न वेति संदेहाच्च; घटभूतल-संयोगानुयोगित्वादीनीत्यादिसमूहालम्बनघटवद्भूतलमितिविशिष्टबुद्ध्योर्वैलक्ष-ण्यानुपपत्तेश्च। तथाच ज्ञानस्वरूपैव सा; नातिरिक्ता, मानाभावात् गौरवाच्च। एवंच तत्तज्ज्ञानसंबन्धेन शाब्दत्वमेव कार्यतावच्छेदकमिति क

---

पत्तिः, "अर्थेनैव विशेषो हि निराकारतया धियाम्" (न्यायकुसुमाञ्जलिः ४-४) इति सिद्धान्तव्याकोपप्रसङ्गादिति भावः। तदेव भङ्ग्यन्तरेणाह—**घटत्वादिनेति**। 'घटोऽभूत्' इति ज्ञानं यदि घटं न विसिनुयात्, तदा घटज्ञानपटज्ञानयोर-विशेषात् निर्णयो न स्यादित्यर्थः। दूषणान्तरमाह—**घटभूतलेत्यादि**। 'घट-वद्भूतलम्' इत्यत्र घटः, भूतलम्, तयोः संयोगः, तस्यानुयोगित्वमित्यादयोऽर्थाः प्रतीयन्ते। परं तु घटप्रतियोगिकसंयोगाश्रयो भूतलमिति विशिष्टबुद्धिविषयास्ते; न पृथक् पृथक्। यदि विषयता विषयरूपेत्यङ्गीक्रियेत तदा बुद्धिविषयत्वं नाम बुद्धिविषया एवेत्युक्तं स्यात्। बुद्धिविषयाश्च घटादय इति समूहालम्बनज्ञानस्य विशिष्टज्ञानस्य च भेदो न स्यात्, उभयत्रापि तेषां विषयत्वाविशेषात्। तथा च विषयस्वरूपा चेत् 'घटभूतलसंयोगानुयोगित्वानि' इत्याकारकसमूहालम्ब-नीयघटादिनिष्ठविषयतानां 'घटवद्भूतलम्' इत्यादिविशिष्टधीनिरूपितघटादिनिष्ठ-विषयतानां च तत्तत्स्वरूपत्वेनावैलक्षण्यात् तयोर्धियोर्भेदो न स्यादिति भावः। एवं विषतायाः विषयरूपत्वे दोषमुपपाद्य स्वसंमतं तस्याः स्वरूपमाह—**तथा चेति**; विषयरूपत्वे पूर्वोक्तदोषाणां दुरुद्धरत्वे चेत्यर्थः। सा; विषयता। **नातिरिक्ता**; ज्ञानस्वरूपान्नातिरिक्तेत्यर्थः। तत्र हेतुमाह—**मानाभावादिति**। मानाधीना हि मेयसिद्धिः। 'अयं घटः' इत्यत्र घटे या ज्ञानविषयता, सा न ज्ञानातिरिक्ता निरूपयितुं शक्यते। अतो न तत्र मानमस्तीति भावः। हेत्वन्तर-माह—**गौरवाच्चेति**। यदि विषयता विषयादिरूपा स्यात् तदा विषयाणाम-

गौरवम्। न च ज्ञानस्वरूपत्वे 'घटवद्भूतलम्' इत्यादिज्ञाननिरूपितानां घटभूतलादिवृत्तिविषयतानामभेदापत्त्या तादृशज्ञानानन्तरं घटप्रकारकज्ञानवानहमितिवत् भूतलप्रकारकज्ञानवानहमित्याद्यनुव्यवसायापत्तिः। किंच

---

नेकत्वात् साप्यनेका स्यादिति गौरवम्। ज्ञानस्वरूपत्वे तु ज्ञानस्यैकत्वात् लाघवमित्यभिमानः। ज्ञानस्वरूपत्वे गौरवाभावमुपपादयति—एवंचेति; ज्ञानस्वरूपत्व इत्यर्थः। **क गौरवमिति**; न कापीत्यर्थः। तटस्थ एव विषयताया ज्ञानस्वरूपत्वे संभावितान् दोषानुत्थाप्य परिहर्तुमादौ दोषानुत्थापयति—**न चेत्यादिना**। अस्योत्तरत्र 'असंभवादिति वाच्यम्' इत्यत्रत्येन वाच्यमित्यनेनान्वयः। **ज्ञानस्वरूपत्वे**; अस्य विषयताया इत्यादिः। **घटभूतलादिवृत्तिविषयतानामिति**; घटवृत्तिप्रकारताख्यविषयताया भूतलवृत्तिविशेष्यताख्यविषयतायाश्चेत्यर्थः। एवं ज्ञानान्तरेऽपि बोध्यम्। तदेवानुसंधायादिपदग्रहणम्। **अभेदापत्त्येति**; घटे प्रकारताख्यविषयता नाम तादृशज्ञानस्वरूपैव; एवं भूतले विशेष्यताख्यविषयतापि तादृशज्ञानस्वरूपैवेत्यङ्गीकारे विशिष्टज्ञानस्यैकत्वात् तादृशविषयतयोरप्यभेदापत्तिरित्यभिप्रायः। अभेदापत्तावनिष्टं प्रसञ्जयति—**तादृशज्ञानानन्तरमिति**; 'घटवद्भूतलम्' इति ज्ञानानन्तरमित्यर्थः। **घटप्रकारकज्ञानवानहमितिवदिति** तादृशानुव्यवसाये सर्वसंप्रतिपन्नतोच्यते। **भूतलप्रकारकज्ञानवानहमित्यापत्तिरिति** तत्र सर्वासंप्रतिपन्नतोच्यते। 'घटवद्भूतलम्' इत्यत्र हि घटप्रकारकभूतलविशेष्यको बोधोऽनुभवसिद्धः। तदनुसारेणानुव्यवसायो घटप्रकारकज्ञानवानहमिति भूतलविशेष्यकज्ञानवानहमिति च सर्वसंमतः। न तु व्यत्यासेन। अतो घटनिष्ठप्रकारताख्यतज्ज्ञाननिरूपितविशेष्यताया घटनिष्ठघटत्वप्रकारतानिरूपिततज्ज्ञानरूपविशेष्यताया अभिन्नतया तज्ज्ञानस्य घटत्वप्रकारतानिरूपितघटनिष्ठविशेष्यताशालित्वात् भूतलप्रकारकघटविशेष्यकज्ञानवानहमिति धीप्रसङ्ग इत्यर्थः। ज्ञानस्वरूपत्वे दोषान्तरमुत्थापयति—**किंचेति**। **समूहालम्बनेति**; आलम्बनशब्दो विषयपरः। घट-

'घटपटौ' इति समूहालम्बनज्ञानस्य भ्रमत्वापत्तिः, पटनिष्ठतज्ज्ञानरूपविशेष्यताया घटत्वप्रकारतानिरूपिततदभाववत्पटादिनिष्ठविशेष्यत्वाभिन्नत्वेन[1] तस्य घटत्वादिनिष्ठप्रकारतानिरूपिततदभाववत्पटादिनिष्ठविशेष्यतानिरूपकत्वात् । अपिच यथा ज्ञानं स्वरूपेण घटादिना संबद्धमिति घटादिविषयकत्वव्यवहारमाधत्ते, तथा स्वरूपेण कालादिनापि संबद्धत्वात् तद्विषयकत्वव्यवहारमप्याटध्यात् । किंच 'ज्ञाने विषयो घटः' इत्यतो बोधानुपपत्तिः,

---

पटसमूहविषयकज्ञानस्येत्यर्थः । भ्रमत्वमेवोपपादयति—**पटनिष्ठेत्यादिना** । अयमत्र शङ्कितुरभिप्रायः—'घटपटौ' इति समूहालम्बनज्ञाने घटः पटश्चेत्युभयमपि विशकलितं विशेष्यतया भासते । घटत्वं पटत्वं चेत्युभयमपि विशकलितं प्रकारतया भासते । न तु घटत्वं घटप्रकारतया, नापि पटत्वं पटप्रकारतया । तथा भानाङ्गीकारेऽपि प्रकारताया ज्ञानरूपतया न विशेषः । अतश्च घटत्वाभाववत्पटविशेष्यकघटत्वप्रकारकत्वात्, एवं पटत्वाभाववद्घटविशेष्यकपटत्वप्रकारकत्वाच्च तदभाववद्विशेष्यकतत्प्रकारकानुभवत्वरूपत्वात् तस्य ज्ञानस्य भ्रमत्वापत्तिरित्यर्थः । इष्यते च प्रमात्वमिति । तत्रैव दोषान्तरमाह—**अपिचेति** । **स्वरूपेणेति**; विषयताया ज्ञानस्वरूपत्वे तस्य घटादिना सह स्वरूपसंबन्ध एव वक्तव्यः । तथाच तत्स्वरूपसंबन्धस्य सर्वाश्रये कालेऽपि सत्त्वात् कालविषयकव्यवहारमप्याटध्यादिति भावः । दोषान्तरमाह—**किंचेति** । 'ज्ञाने विषयो घटः' इति व्यवहारे घटनिष्ठा या ज्ञानविषयता सा यदि ज्ञानस्वरूपा स्यात्, तदा 'ज्ञाने विषयं ज्ञानम्' इत्युक्तप्रायं स्यात् । तच्च न संभवति । यद्यपि ज्ञानान्तरं ज्ञानान्तरस्य विषयतामश्नुवीत—यथा आचार्यो जानाति 'शिष्येण वाक्यार्थो ज्ञातः' इति—तथापि एकस्मिन्नेव ज्ञाने निरूप्यत्वं निरूपकत्वं चासंभवीति विवक्षितोऽर्थः । एवं तटस्थेनोद्भावितान् दोषान् क्रमेण परः समाधत्ते—

[1] विशेष्यताभिन्नत्वेन A.

एकस्य निरूप्यत्वनिरूपकत्वयोरसंभवादिति वाच्यम्; 'घटवद्भूतलम्' इत्यादिज्ञानानां घटादिनिष्ठप्रकारताभूतलादिनिष्ठविशेष्यतादिरूपत्वाङ्गीकारेऽपि फलबलादनुभवबलाच्च घटनिष्ठविशेष्यताभूतलनिष्ठप्रकारताद्यनात्मकत्वाददोषः। अन्यथा अतिरिक्तत्वाङ्गीकारेऽपि तज्ज्ञानानां घटादिनिष्ठप्रकारतानिरूपकत्ववत् तन्निष्ठविशेष्यतानिरूपकत्वं कुतो नेति प्रश्ने मूकतैवोत्तरं स्यात्। एवं समूहालम्बनस्य घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यतात्मकत्वेऽपि तन्निरूपितपटनिष्ठविशेष्यतानात्मकत्वान्न भ्रमत्वम्। ज्ञानत्वेन निरूपकत्वस्य विषयतात्वेन निरूपितत्वस्य संभवाच्च। न च

---

**घटवद्भूतलमित्यादिज्ञानानामिति**। संप्रतिपन्नांशमाह—**घटादिनिष्ठप्रकारतेति**। **फलबलादिति**; अनुव्यवसायरूपादित्यर्थः। अनुव्यवसायो हि घटप्रकारकज्ञानवानहम्, भूतलविशेष्यकज्ञानवानहमित्येव जायते। न तु विपरीतः। अनुभवोऽप्येवमेव। अतः अनुव्यवसायरूपफलबलात् तथा अनुभवबलाच्चेत्यर्थः। तथानङ्गीकारे दोषमाह—**अन्यथेति**; घटादिनिष्ठप्रकारताभूतलादिनिष्ठविशेष्यतादिरूपत्वानङ्गीकार इत्यर्थः। **अतिरिक्तत्वाङ्गीकारेऽपि**; ज्ञानस्वरूपातिरिक्तत्वाङ्गीकारेऽपीत्यर्थः। **तज्ज्ञानानाम्**; घटवद्भूतलमित्यादिज्ञानानाम्। **तन्निष्ठेति**; घटादिनिष्ठेत्यर्थः। **मूकतैवेति**; सैव निग्रहस्थानमित्यर्थः। समूहालम्बनज्ञाने आपादितं दोषमुद्धरति—**एवमिति**। घटः पटश्चेत्युभयमपि न घटत्वपटत्वप्रकारतानिरूपितविशेष्यताविधुरं विशकलितं भासते, येनोक्तो दोषः प्रसजेत्। किंतु घटो घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतावानेव, पटः पटत्वनिष्ठप्रकारतानिरूपितविशेष्यतावानेव भासते। अतो न व्युत्क्रमेण भानम्; नापि भ्रमत्वापत्तिरित्यर्थः। निरूप्यनिरूपकभावानुपपत्तिं परिहरति—**ज्ञानत्वेनेति**। ज्ञाने समस्ति रूपद्वयं ज्ञानत्वं विषयतात्वं चेति। 'ज्ञाने विषयो घटः' इत्यत्र 'ज्ञाने'

ज्ञानस्वरूपस्य ज्ञानाद्यजन्यत्वात् ततः पूर्वं 'ज्ञातः' इति प्रतीत्यापत्तिरिति वाच्यम्, ज्ञानसत्त्वे इष्टापत्तेः। तदभावे स्वरूपाभावादेव प्रतीत्यभावोपपत्तिरिति चेत्, न; ज्ञानव्यक्तीनामननुगतत्वेनानुगतकार्यकारणभावासंभवस्य तदवस्थत्वादित्यपास्तम्। विषयतात्वस्यातिरिक्तस्याङ्गीकारेणानुगमसंभवाच्च। 'विषयो विषयः' इत्याद्यनुगतव्यवहारेण प्रागुक्तकार्यतावच्छेदकतया चातिरिक्तैकविषयताया अङ्गीकारे क्षत्यभावाच्चेत्याहुः।

---

इत्यत्र यत् ज्ञानत्वं प्रतीयते तद्विशिष्टरूपेण ज्ञानं घटस्य निरूपकं भवति। 'घटः' इत्यत्र यत् विषयत्वं प्रतीयते तद्विशिष्टरूपेण ज्ञानं निरूपितं भवति। अतो नोक्तदोष इत्यर्थः। यथा यज्ञशर्मणो वटोर्मातुल एवाचार्यो भवति। तत्र मातुले समस्ति रूपद्वयं मातुलत्वमाचार्यत्वं च। तत्र मातुलत्वं मातुलव्यवहारहेतुः, आचार्यत्वमाचार्यव्यवहारहेतुस्तद्वदिति भावः। यथाहुः—

> "आचार्यो मातुलश्चेति यथैको व्यपदिश्यते।
> संबन्धिभेदादर्थात्मा स विधिः पक्तिभावयोः"॥
>
> (वाक्यपदीयं क्रियासमुद्देशः, श्लोकः ६३)

इति। दोषान्तरं तटस्थेनानुद्भावितमपि समाधातुं स्वयमेवोद्भावयति—**न च ज्ञानस्वरूपस्येति**। **ततः पूर्वम्**; ज्ञानविषयीकरणात्पूर्वम्। समाधत्ते—**ज्ञानसत्वे** इति। **तदभावे**; ज्ञानाभावे। एवं विषयताया ज्ञानस्वरूपत्वमाशङ्क्य समाधत्ते—**नेति**। **ज्ञानव्यक्तीनामननुगतत्वेन**; 'अयं घटः, अयं पटः' इत्यादिज्ञानानामननुगतत्वेनेत्यर्थः। अपास्तमित्यत्र हेतुमाह—**विषयतात्वस्येति**। **अतिरिक्तस्येति**; प्रकारताविशेष्यतासंसर्गतातिरिक्तस्येत्यर्थः। अनुगमसंभवमेवोपपादयति—**विषयो विषय** इति। घटपटकुड्यकुसूलादीनां द्रव्यत्वेनानुगमो हि 'इदं द्रव्यमिदं द्रव्यम्' इत्याद्यनुगतव्यवहारेण भवति। एवमिहापीति

२९. ननु 'आकाशोऽस्ति' इति वाक्यं श‍ृण्वत आकाशपद-वृत्त्यंशेऽनुद्बुद्धसंस्कारस्य तत एव पदात् समवायेन स्मृते आकाशे तद्विषयकशाब्दबोधापत्तिरिति चेत्; न, प्रकारताविशेष्यतान्यतरसंबन्धेन शाब्दं प्रति तेनैव वृत्तिजन्योपस्थितेरपि हेतुत्वेनादोषात्। वृत्त्या पदजन्य-पदार्थोपस्थितिरेवासत्तिपदेनोच्यते। अत एव प्रत्यक्षदृष्टस्य तण्डुलादेः 'पचति' इत्येतज्जन्यशाब्दबोधविषयता न। पदाव्यवधानमासत्तिरिति तु न युक्तम्, 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यत्र योजनयान्वयबोधानुप-पत्तेः। योजनावाक्यादेवान्वयबोध इति चेत्; न, प्रथमवाक्यस्याबोध-

---

भावः। प्रागुक्तकार्यतावच्छेदकतयेति; तद्धर्मावच्छिन्नविषयकशाब्दबुद्धिं प्रतीति प्रागुक्तशाब्दबुद्धिरूपकार्यतावच्छेदकतयेत्यर्थः।

२९. पूर्वोक्तकार्यकारणभावे व्यभिचारमाशङ्कते—नन्विति। वाक्यं श‍ृण्वत इत्यनेन पदज्ञानसद्भाव उच्यते। समवायेनेति; आकाशस्य समवायेन शब्दाश्रयत्वादिति भावः। तद्विषयकेति; आकाशविमयकेत्यर्थः। समाधत्ते—प्रकारतेत्यादि। तेनैव; प्रकारताविशेष्यतान्यतरसंबन्धेनैव। एवंच प्रकृते आकाशस्य तेन संबन्धेन वृत्तिजन्योपस्थित्यभावान्न दोष इति भावः। प्रसङ्गादा-सत्तिपदार्थमाह—वृत्त्येति। अत एव; वृत्त्या पदजन्यपदार्थोपस्थितेरासत्तिपदार्थ-त्वादेव। शाब्दबोधविषयता नेति; तण्डुलस्य वृत्त्या पदजन्यपदार्थोपस्थि-त्यभावेनासत्त्यभावात् शाब्दबोधविषयत्वं नेत्यर्थः। आसत्तिपदार्थविषये मतान्तरं निराकरोति—पदाव्यवधानमिति। पदयोः पदानां वा यदव्यवधानं सा आसत्ति-रित्यर्थः। गिरिर्भुक्तमित्यादि; 'गिरिरग्निमान्; देवदत्तेन भुक्तम्' इति विवक्षि-तेऽर्थे पदानां व्युत्क्रमेण प्रयोगे पदानामव्यवधानाभावात् बोधो न स्यात्। इष्यते च तत्रापि बोध इत्यर्थः। आसत्तेः पदाव्यवधानरूपत्ववादी शङ्कते—योजना-वाक्यादिति। 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इति वाक्यश्रवणानन्तरं श्रोता वाक्य-

कत्वापत्तेः। योजनावाक्यं च तात्पर्यग्राहकत्वेन प्रकरणादिवदुपयुज्यत इति बोध्यम्। न च 'घटमानय' इति वाक्यं हस्तिनं च समूहालम्बनविधया स्मरतो घटपदादिभ्यो घटादेर्हस्तिनश्च हस्तिपकस्य समूहालम्बन-

---

योजनामेवं करोति—गिरिरग्निमान्, देवदत्तेन भुक्तमिति। तदनन्तरमन्वयबोधो जायते। अतो न दोष इति तदभिप्रायः। समाधत्ते—**प्रथमेति**। तर्हि योजितवाक्यस्यैव बोधकत्वं स्यात्, न तु प्रथमश्रुतवाक्यस्येति तस्याबोधकत्वं दोष एवेति भावः। तर्हि योजनामन्तरापि तत्र बोधः स्यादित्यत्राह—**योजनावाक्यं चेति**। एवंच पदाव्यवधानमासत्तिरिति प्रवादो न ग्राह्य इति भावः। मञ्जूषायां तु—"आसत्तिरपि मन्दस्याविलम्बेन शाब्दबोधे कारणम्। सा चान्वयप्रतियोगिपदार्थानां तद्बोधकपदानां चाव्यवधानजप्राथमिकोपस्थितिरूपा" (मञ्जूषा, आसत्तिनिर्वचनम्) इति पदाव्यवधानमासत्तिरित्युपपादितम्। तत्तु तत्रैवावधेयम्। वृत्त्या पदजन्यपदार्थोपस्थितिः शाब्दबोधे कारणमिति कार्यकारणभावेऽतिप्रसङ्गमाशङ्कते—**न चेति**। अयं भावः—कश्चित् 'घटमानय' इति वाक्यं हस्तिनं च समूहालम्बनेन स्मरति। अनन्तरं तस्य घटपदेन घटस्य हस्तिना हस्तिपकस्य च समूहालम्बनेन स्मरणं भवति। तत्र यत् घटहस्तिपकसमूहस्मरणं तत् पूर्वजातात् 'घटमानय'इतिवाक्यहस्तिसमूहस्मरणाज्जातम्। तत्र यद्यपि घटांशे वृत्त्या स्मरणं जायते; हस्तिपकांशे तु 'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्' इति न्यायेन स्मरणं जायत इति वैलक्षण्यं समस्ति—तथापि समूहविषयकज्ञानस्यैकत्वात् घटांशे विद्यमानं वृत्तिजन्योपस्थितित्वं हस्तिपकांशेऽपि सुवचमिति कृत्वा शङ्का क्रियत इति बोध्यम्। **समूहालम्बनविधया**; समूहविषयत्वेन। **स्मरतः**; पुरुषस्येति शेषः। **घटपदादिभ्य** इति; हेतौ पञ्चमी। एवं **हस्तिनश्चेत्यपि**। **समूहालम्बनस्मरणे**; समूहालम्बन-

स्मरणे सति घटानयनवत् हस्तिपकस्यापि शाब्दबोधविषयतापत्तिः, समूहालम्बनपदार्थोपस्थितौ वृत्तिजन्यत्वसत्त्वादिति वाच्यम ; शक्तिज्ञान-पदार्थोपस्थित्योः कार्यकारणभावे समानविषयत्वदानेनाक्षतेः ।

३०. यत्तु विषयतया शाब्दं प्रत्येव तेन संबन्धेन वृत्तिजन्यो-

---

विषया स्मरणे । **घटानयनवत्** ; वृत्त्या पदजन्यपदार्थोपस्थितिसत्त्वात् यथा घटानयनबोधो जायते, तथा हस्तिपकबोधोऽपि स्यात् । समूहालम्बनज्ञानस्यैकत्वेन घटांशे विद्यमानस्य वृत्त्या पदजन्यपदार्थोपस्थितित्वस्य हस्तिपकांशेऽपि सुवचत्वादिति भावः । अत्र हस्तिपकस्मृतेर्वृत्तिज्ञानजन्यत्वसंपादनाय हस्तिनोऽपि वाक्यस्मृतिविषयतोक्तेति बोध्यम् । समाधत्ते—**शक्तिज्ञानपदार्थोपस्थित्योरिति** । **समानविषयत्वेति** ; यदंशविषयकं शक्तिज्ञानं तदंशविषयिण्येव पदार्थोपस्थितिर्भवति । अतो घटांशविषयकं शक्तिज्ञानं घटविषयिणीमेव पदार्थोपस्थितिं जनयेत्, न तु हस्तिपकविषयिणीमिति न दोष इति भावः । अयमत्र निर्गलितार्थः—विशेष्यतासंबन्धेन तद्धर्मप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नविषयत्वावच्छिन्ना वृत्तिज्ञाननिष्ठा या कारणता तन्निरूपितकार्यताविशिष्टतद्धर्मप्रकारकोपस्थितिः कारणमिति कार्यकारणभावो विवक्षितः । उक्तस्थले च हस्तिपकोपस्थितेर्वृत्तिज्ञानजन्यत्वेऽप्युक्तधर्मानाक्रान्तत्वान्न शाब्दबोधापत्तिः । तत्र हि हस्तिपकोपस्थितिनिष्ठा या आपाद्यमाना जन्यता सा न हस्तिपकविषयत्वेनावच्छिद्यते । नापि वृत्तिज्ञाननिष्ठजनकतां हस्ती विषयत्वेनावच्छिनत्ति, वृत्तिज्ञाने धर्मित्वेनाभानात् । एवं च वृत्तिज्ञानोपस्थितिशाब्दबोधानां समानविषयकत्वेन कार्यकारणभावः फलितो वेदितव्यः ।

३०. मतान्तरं दूषयितुमनुवदति—**यत्त्विति** । **विषयतया** ; प्रकारताविशेष्यतासंबन्धेन । **शाब्दं प्रत्येव** ; शाब्दबुद्धित्वावच्छिन्नं प्रति । तेन

पस्थितिर्हेतुरिति ; तन्न, अनुपस्थितस्यैव संसर्गस्य भानमिति सकल-तान्त्रिकसिद्धान्तविरोधापत्तेः । किंच वाक्यज्ञानकार्यतावच्छेदकं विशिष्ट-बुद्धित्वमेव वाच्यम् ; प्रागुक्तयुक्तेः । तथाचोपस्थित्यैव कृतकृत्यतया शाब्दबोधोच्छेदापत्तिः । तादृशज्ञानद्वयस्यानुभवविरुद्धत्वाच्च ।

३१. नन्वेवमपि पदार्थोपस्थितिसमये वाक्यर्थोपस्थितिरपि कुतो न? तेन वाक्यस्यापि संबन्धग्रहात् । किंच पदार्थानामिव वाक्यार्थ-स्यापि स्मरणमेव स्यात्, नानुभवः ; संबन्धिज्ञानतयैव पदज्ञानवत् तदुपयोगादिति चेत् ; न, फलबलात् पदार्थोपस्थितेः पूर्वं नियमतो वाक्यार्थांश उद्बोधकासमवधानकल्पनात् । एवं च वस्त्रसादौ 'हरेऽव' इत्यादौ च विशिष्टशक्त्यैव संसर्गांश उद्बोधकासमवधानात्प्राक् पदार्थोप-

---

संबन्धेन ; प्रकारताविशेष्यतासंबन्धेन । वृत्तिजन्योपस्थितिर्हेतुरिति ; अतो न पूर्वोक्तो दोषगण इति भावः । दूषयति—तन्नेति । अनुपस्थितस्यैव ; वृत्तिजन्योपस्थित्यविषयस्यैव । दोषान्तरमाह—किंचेति । वाक्यज्ञानेति ; पद-ज्ञानस्य पदार्थोपस्थितिरिव वाक्यज्ञानस्य वाक्यार्थोपस्थितिः कार्यत्वेनाङ्गी-करणीया । वाक्यार्थोपस्थितिश्च विशिष्टबुद्धिरेवेति सा शाब्दबोधान्नातिरिच्यते । अतः शाब्दबोधोच्छेद एव स्यादिति भावः । तादृशज्ञानद्वयस्येति ; वाक्यात् वाक्यार्थोपस्थितिः शाब्दबुद्धिश्चेत्युभयविधज्ञानमुत्पद्यत इत्येतदनुभवविरुद्धमिति भावः ।

३१. वाक्यशक्त्यङ्गीकारे दोषमाशङ्कते—नन्विति । तेन ; वाक्यार्थेन सह । दोषान्तरमाह—किंचेति । तदुपयोगात् ; वाक्यज्ञानोपयोगात् । समा-धत्ते—नेति । फलबलादिति ; पदार्थोपस्थितिसमये वाक्यार्थावबोधरूपफल-

स्थितिमात्रम्। ततस्तदंशेऽप्युद्बोधकसमवधाने तद्विषयको वाक्यार्थबोधः। अत एव 'अपूर्वो वाक्यार्थः' इति प्रवादः संगच्छते। अपूर्वत्वं च शाब्दबोधप्राक्क्षणवृत्तितज्जनकशब्दजन्यवृत्त्यविषयत्वमित्याहुः।

यत्तु किंचेत्यादि, तन्न; वाक्यार्थप्रतीतेरनुभवत्वाभावात्। स्वर्गनरकादिकं शृण्वतोऽपि 'तदनुभवामि' इत्यप्रतीतेः। तस्मात् शाब्दत्वं जातिविशेष एवानुभवबलात् कल्प्यते, नानुभवत्वव्याप्यम्। किंच वाक्यज्ञानस्य तादृशविजातीयज्ञानत्वमेव कार्यतावच्छेदकम्; अतो न ततः स्मृतिः। अन्यथा तवापि वाक्येनाकाङ्क्षारूपसंबन्धस्य सत्त्वात् ततः स्मृतिजननाशङ्का दुरुद्धरैव स्यात्। एतदेव पदार्थोपस्थितिकार्यतावच्छेदकम्। न चैवमस्यास्मृतित्वात् समभिव्याहारकारणत्वज्ञानांशेऽनुद्बुद्धसंस्कारस्यापि वाक्यार्थबोधः स्यादिति वाच्यम्, फलानुरोधेन तत्राप्युद्बुद्धसंस्कारस्य हेतुत्वकल्पनात्। पदार्थोपस्थितिश्च स्मृतिरेव। एवंच केवलघटपदात् घटत्वविशिष्टस्मरणमेव न शाब्दबोध इति न तत्र वृत्तिजन्योपस्थित्यपेक्षा। एवं 'राजपुरुषः' इत्यादितोऽपि। वृत्तावेकार्थी-

---

बलादित्यर्थः। **तदंशे**; संसर्गांशे। वाक्यार्थस्य स्मरणमेव स्यात्, नानुभव-इति यो दोष उद्भावितः, तमिष्टापत्त्या परिहरति—**वाक्यार्थेत्यादि**। अनुभवत्वाभावमेवोपपादयति—**स्वर्गनरकादिकमिति**। शाब्दत्वं पृथक् जातिः। **नानुभवत्वव्याप्यमिति**; अनुभवत्वं प्रत्यक्षमात्रवृत्ति, न तु प्रत्यक्षादिचतुष्टय-साधारणमिति भावः। **तादृशविजातीयेति**; शाब्दत्वेत्यर्थः। आशङ्कते—**न चैवमिति**। **अस्य**; वाक्यार्थज्ञानस्य। **तत्रापि**; वाक्यार्थज्ञानेऽपि। राज-

भावकल्पनसामर्थ्येन पदार्थोपस्थितिसमय एव संसर्गांशेऽपि नियमत उद्बोधकसमवधानकल्पनात् विशिष्टविषयैव पदार्थोपस्थितिः। शब्दजन्यत्वमात्रेण परं तस्यामपीतरस्मृतिविलक्षणः 'शाब्दयामि' इति व्यवहारो बोध्यः। न तु वाक्यज्ञानपदार्थोपस्थितिकार्यतावच्छेदकीभूतजातिविशेषाक्रान्तता तस्या इति बोध्यम्।

यत्तु पदार्थोपस्थितेः स्मृतित्वे स्मारकतातिरिक्तमूलभूतसंबन्धकल्पनापत्तिः। एकसंबन्धिज्ञानं ह्यपरसंबन्धिस्मारकम्। न तु स एव संबन्धः, हस्तिपकादिषु तथा दर्शनात्। पदपदार्थयोस्तु बोधकतैव संबन्धः, तदतिरिक्तशक्त्यभावस्योक्तत्वात्। बोधश्च त्वन्मते पदात् स्मृतिरूप एव, न त्वन्य इति स्पष्टमेवेति—तन्न; पदज्ञानस्योभयसाधारणतदर्थविषयकबोधत्वं कार्यतावच्छेदकमिति स्मारकतातिरिक्तशाब्दबोधजनकत्वरूपस्य संबन्धस्य क्लृप्तत्वात्। पदैर्हि पदार्थोपस्थितौ तैरेव वाक्यशक्तिसहकारेण पदार्थविषयकस्तत्संसर्गविषयकश्च शाब्दबोधो जन्यत इति क्रम इत्यलं विस्तरेण।

---

पुरुष इत्यादौ समासे विशेषमाह—एवमिति। विशिष्टविषयैवेति; संसर्गविशिष्टविषयैवेत्यर्थः। तर्हि तत्र शाब्दत्वव्यवहारः कथमित्यत्राह—**शब्दजन्यत्वेति**। तस्याः; पदार्थोपस्थितेः।

दोषान्तरमाशङ्क्य निरस्यति—यत्त्विति। मूलभूतेति; स्मारकतामूलभूतेत्यर्थः। तैरेव; पदैरेव।

३२. यत्तु मीमांसकाः—लक्षणयैवोपपत्तौ वाक्यार्थे शक्तिकल्पना न युक्ता । न चापूर्वत्वम्; प्रागविज्ञातहरिद्रानामकनदीविशेषेण पुंसा 'हरिद्रायां नद्यां घोषः' इति वाक्ये श्रुते नदीपदसमभिव्याहारेण तदानीमेव हरिद्राशब्दस्य नदीविशेषे शक्तिग्रहपूर्वकं नदीलिङ्गात् तत्संबन्धित्वेनावगततीरप्रत्ययवत् पदैः पदार्थानामुपस्थितावाकाङ्क्षाज्ञानादिसाचिव्यात्

---

३२. अत्र मीमांसकाः—वाक्यस्य वाक्यार्थे पृथक् शक्तिर्वक्तुं न शक्यते । तथा सति वाक्यावयवेषु पूर्वपूर्वपदेषु विस्मृतेषु वाक्यार्थावगतिर्न स्यात् । यथा हि विस्मृतपूर्वपूर्ववर्णानामन्तिमवर्णमात्रात् न पदार्थावगतिरेवमत्रापि । अतः पदान्येव प्रथमं पदार्थानवबोध्यानन्तरं वाक्यार्थमपि लक्षणयावबोधयन्ति । यथाहुः—

"[1]न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति नः स्थितिः ॥"

(श्लोकवार्तिकम्, वाक्या. श्लो. २२९)

इति । तन्मतं खण्डयितुमनुवदति—**यत्त्विति । मीमांसका इति** ; भट्टपादादयस्तदनुसारिणो भामतीकल्पतरुकारादयश्चेत्यर्थः । **उपपत्ताविति** ; वाक्यार्थबोधस्येति शेषः । **अपूर्वत्वमिति** ; वाक्यार्थस्येति शेषः । तदेवोपपादयति—प्रागित्यादिना । **नदीपदसमभिव्याहारेणेति** ; सिद्धपदसमभिव्याहारस्यापि शक्ति-

[1] यद्यपि तत्रोत्तरार्धमन्यथा पठितं, तथापि नागेशेन मञ्जूषायामेष पाठ आश्रितः । स एवात्र पाठान्तरमप्याह—"वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव हि दृश्यते ।" इति । p. 434. लघुमञ्जूषा. Chow: Sans. Series, 46.

तत एवोपस्थिते वाक्यार्थे तद्ग्रहसंभवात्। तथोपस्थितस्यापि वृत्त्यानुपस्थितत्वात् न स बोधः शाब्द इति शाब्दत्वप्रकारकबोधानुभवात् मध्ये लक्षणाग्रहः। स च स्वबोध्यसंबन्धितया तदुपस्थितिः, स्वबोध्यसंबन्धिनः स्वबोध्यस्योपस्थितेरेव प्राचीननये लक्षणात्वात्। यद्वा स्वसंबन्धिपदार्थबोधकं वाक्यमिति तद्ग्रहः; तीरसंबन्धिप्रवाहबोधकं गङ्गापदमितिवत्। लक्षकत्वं च स्वसंबन्ध्यर्थबोधकत्वमेव। बोध्यसंबन्ध एव च लक्षणा। पदजन्यपदार्थोपस्थित्याकाङ्क्षाद्यसहकृतप्रमाणबोध्यबोधकत्वं चाधिगतार्थगन्तृत्वमिति न वेदस्यानधिगतार्थगन्तृतारूपप्रामाण्यहानिरिति—तन्न; तादृशबोधद्वयाननुभवात्; अनुपपत्तिप्रतिसंधानाभावेन लक्षणाया अयोगाच्च। तात्पर्यानुपपत्त्या लक्षणेत्यपि वक्तुमशक्यम्, तस्य सर्वत्राहेतुत्वात्; नियमतः पूर्वं तात्पर्यज्ञानस्यापि कल्पनापेक्षया शक्तिकल्पनस्योचितत्वात्।

वस्तुतस्तु शक्यसंबन्ध एव लक्षणा न बोध्यसंबन्ध इत्येकार्थीभाववादे प्रपञ्चयिष्यते। तथाच तन्मते लक्षणा वक्तुमशक्यैवेति दिक्।

---

ग्राहकत्वादिति भावः। तत्संबन्धित्वेन; नदीसंबन्धित्वेन। तत एव; पदार्थैरेव। तर्हि लक्षणा किमर्थेत्यत्राह—तथोपस्थितस्यापीति। स च; लक्षणापदार्थश्च। एवमनूदितं मीमांसकमतं दूषयति—तन्नेति। तादृशबोधद्वयस्येति; पदार्थवाक्यार्थबोधद्वयस्येत्यर्थः। दोषान्तरमाह—अनुपपत्तीति। अन्वयानुपपत्त्यभावेऽपि तात्पर्यानुपपत्त्या तत्कल्पनेत्यत्राह—तात्पर्येत्यादि। तस्य; तात्पर्यानुपपत्तिरूपहेतोः।

३३. यत्तु—वाक्यार्थे वाक्यस्य न शक्तिः; किं तु पदानामेवान्विते[1] शक्तिः। पदैरेव तदर्थप्रतीत्युपपत्तौ वाक्येऽपि शक्तिकल्पने मानाभावात्। किंच वृत्तिविषयत्वं विना शाब्दबोधविषयत्वासंभवात्

---

३३. अन्येऽपि वेदान्तिनो वाक्यशक्तिमनङ्गीकुर्वाणा वाक्यार्थबोधमन्विताभिधानशक्त्या समर्थयन्ते। यदाहुर्नृसिंहाश्रमाः—"वृत्तिं विना शाब्दबोधविषयत्वासंभवात् वाक्यार्थविषयिणी वृत्तिर्वक्तव्या। सा चातिरिक्ता गौरवान्नेति क्लृप्तपदार्थशक्तिरेव तद्विषयिणी कल्प्यते। पदानामन्वयसामान्ये शक्तौ तु विशेषमविषयीकृत्य सामान्यबुद्धेरपर्यवसानात् तत्तत्पदसामान्यशक्तिभिरेव समभिव्याहृतपदोपस्थापितपदार्थविशेषनिरूपितान्वयविशेषः सेत्स्यतीत्येकशक्तिलाघवम्। किंचैकपदप्रयोगेऽप्यन्वयविशेषस्य नियमेन जिज्ञासादर्शनात् तस्याश्चान्वयसामान्यज्ञानपूर्वकत्वात् तज्ज्ञानस्य च शब्दादन्यतोऽसंभवात् शब्द एवान्वितमभिधत्ते इति वाच्यम्। दृष्टे जम्बीरफलादौ रसविशेषजिज्ञासावत् तत् भविष्यतीति चेन्न, तत्र नियमेन तदभावात्। अन्यथा वैशेषिकमत इव व्याप्तिप्रतिसंधानदशायामेव शब्दादर्थसंसर्गः प्रतीयत इति शब्दोऽप्यप्रमाणं स्यात्" (तत्त्वविवेकः परि० १) इति। तेषां मतमनुवदति—**यत्त्विति**। अस्याहुरित्यनेनान्वयः। **वाक्यार्थे**; अन्वयरूपे। **अन्विते**; अन्वयविशिष्टे। तत्रान्वयस्यापि घटितत्वात् पदशक्त्यैवान्वयबोधोपपत्तौ वैयाकरणैः स्फोटवादिभिरितरतान्त्रिकानभिमता वाक्यशक्तिर्न कल्प्येति भावः। **तदर्थेति**; वाक्यार्थरूपान्वयेत्यर्थः। व्यवहारेण जायमानः शक्तिग्रह इतरान्वित एव भवतीति तात्पर्यम्। **मानाभावादिति**; 'अनन्यलभ्यः शब्दार्थः' इति हि न्यायविदः। अत्र त्वन्वयरूपस्यार्थस्य पदशक्त्यैव भानोपपत्तौ वाक्यशक्तिकल्पने न मानमिति भावः।

[1] अन्वये. A.

वाक्यार्थविषया वृत्तिरवश्यं स्वीकार्या। सा चातिरिक्ता गौरवान्नेति क्लृप्तपदार्थशक्तेरेव तद्विषयता कल्प्यते। पदानां च सामान्यत इतरान्विते शक्तावपि विशेषाविषयसामान्यबुद्ध्यभावात् तत्तत्पदसामान्यशक्तिभिरेव समभिव्याहारविशेषकारणत्वादिरूपाकाङ्क्षाज्ञानबलात् तत्तत्पदार्थविशेषनिरूपितान्वयविशेषबोधः सिध्यति।

एतेन—पदानामेवेतरान्विताभिधायकत्वे घटादिपदस्येतरान्विते शक्तिग्रहवतो 'घटमानय' इत्यानुपूर्वीज्ञानवतः प्रागुक्तकार्यकारणभावाग्रहवतोऽपि 'घटकर्मकमानयनम्' इति बोधापत्तिः। किंच विशेष्यविशेषणभावे विनिगमनाविरहात् सामान्यतः शक्त्या 'इतरान्वितो घटः, इतरान्वितं कर्मत्वं, तथा आनयनम्, तथा कृतिः' इत्येवं बोधचतुष्टयापत्तिः; न

---

**वाक्यार्थविषयेति**; अन्वयविषयिणीत्यर्थः। **सा च**; वृत्तिश्च। **अतिरिक्ता**; पदशक्तेरित्यादिः। **क्लृप्तेति**; क्लृप्ता या पदार्थशक्तिः, तस्या एवेत्यर्थः। **तद्विषयता**; वाक्यार्थविषयता। नन्वेवं कथं विशेषबोध इत्यत्राह—**पदानामिति**। **सामान्यतः**; अन्वयत्वस्वरूपसामान्यधर्मपुरस्कारेण। **विशेषाविषयेति**; 'निर्विशेषं न सामान्यम्' इति सर्वतान्त्रिकसिद्धान्तादिति भावः। **सामान्यशक्तिभिः**; अन्वयत्वावच्छिन्नान्वयविषयशक्तिभिः। **पदार्थविशेषेति**; गवादिपदार्थविशेषेत्यर्थः। **अन्वयविशेषः**; गोकर्मकत्वादिरूपः।

**एतेन**; समभिव्याहारविशेषादेः कारणत्वाङ्गीकारेण। **पदानामेवेति**; आनयादिपदनिरपेक्षगवादिपदानामित्यर्थः। **प्रागुक्तकार्यकारणभावाग्रहवत** इत्यनिष्टप्रसञ्जने हेतुः। अनिष्टान्तरमपि प्रसञ्जयति—**किंचेति**। **तथा**; इतरान्वित-

घटीयं कर्मत्वमिति । अपिच 'घटः कर्मत्वमानयनं कृतिः' इत्यत इतरान्वित-कर्मत्वादौ शक्तिग्रहवतस्तथा बोधापत्तिश्चेति निरस्तम् ।

किंच एकपदप्रयोगेऽप्यन्वयविशेषस्य नियमेन जिज्ञासादर्शनात् तस्याश्चान्वयसामान्यज्ञानपूर्वकत्वनियमात् तज्ज्ञानस्य शब्दादन्यतोऽसंभवात् शब्द एवान्वितमभिधत्ते । न चापूर्वत्वम्; विशेषतः पदार्थान्तरघटितस्य तदन्वयविशेषरूपवाक्यार्थस्य प्रागनुपस्थितावप्यन्वितत्वादिसामान्य-धर्मप्रकारेण प्राक् तदुपस्थितेः सुलभत्वात् । इतरान्विते शक्तिरिति त्वयुक्त-मेव, पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेन शक्तिग्रहस्या-युक्तत्वात् । 'घटः' इत्यतो घटमात्रबोधस्तु शक्तिभ्रमादित्याहुः । तन्न;

---

मित्यर्थः । **तथा बोधापत्तिः**; घटीयं कर्मत्वमिति बोधापत्तिरित्यर्थः । **निरस्त-मिति**; अत्र हेतुः पूर्वमेव एतेनेत्युक्तः ।

अन्विताभिधानस्यावश्यकत्वमुपपादयति—**किंचेति** । **नियमेन जिज्ञासादर्शनादिति**; 'गाम्' इत्युक्ते 'गौः किं करणीया' इति क्रियाविशेषान्वयस्य, 'आनय' इत्युक्ते 'किमानेयम्' इति कारकविशेषान्वयस्य च नियमेन जिज्ञासा दृश्यत इत्यर्थः । **अन्वयसामान्येति**; यथा निर्विशेषं न सामान्यमिति, तथा निःसामान्यो विशेषोऽपि नेति न्याय इति भावः । **न चापूर्वत्वमिति**; अन्वयसामान्यस्येति शेषः । तदेवोपपादयति—**विशेषत इत्यादिना** । **विशेषतः पदार्थान्तरेति**; विशेषधर्मावच्छिन्नपदार्थान्तरेत्यर्थः । **तदन्वयेति**; पदार्थविशेषान्वयेत्यर्थः । **तदुपस्थितेः**; अन्वयोपस्थितेः । केवलमन्विते शक्तिरिति मतं प्रस्तुतम् । तन्मतावलम्बी इतरान्विते शक्तिरितीतरपदघटितान्वयशक्तिवादिनं निरस्यति—**इतरेति** । **पदार्थान्तरस्येति**; इतरपदार्थस्येत्यर्थः । यदि पदानामन्विते शक्तिः, तर्हि केवलघटपदात् घटप्रतीतिरनुभवसिद्धा कथमित्यत्राह—**घट इति** । पदान्तरं

घटादिपदज्ञानस्य घटान्वयोभयविषयकशाब्दत्वापेक्षया घटविषयकशाब्दत्वस्य कार्यतावच्छेदकत्वे लाघवात्। किंच त्वन्मते अन्वये शक्तेः स्वीकारेऽपि विशेषबोधाय समभिव्याहारविशेषस्य कारणत्वस्वीकारे तथाविधकार्यकारणभावाग्रहवतो बोधवारणाय तद्ग्रहस्यापि कारणत्वस्वीकारे च विपरीतगौरवापत्तेः; तावतैव वाक्यशक्तेः सिद्धत्वाच्च[1]।

---

विना केवलं घट इति पदमित्यर्थः। **घटमात्रेति**; मात्रपदेनान्वयव्यवच्छेदः। केवलघटपदात् घटमात्रप्रतीतिप्रसञ्जने इष्टापत्तिमवलम्ब्य तथा प्रतीतिमनुभवसिद्धां समर्थयते—**शक्तिभ्रमादिति**। अन्वितघटविषयायाः शक्तेस्तन्मात्रविषयत्वं भ्रमकृतमिति भावः। यद्वा 'सत्या, सत्यभामा' इतिवत् पदैकदेशन्यायेनार्थेऽपि विशिष्टे केवले च पदानां शक्तिग्रहः सूपपाद इत्याहुः।

एवमन्विताभिधानमतमुपपाद्य खण्डयति—**तन्नेति**। पदज्ञानं करणम्, शाब्दबोधः फलमिति सिद्धान्तः। तत्र फलत्वेन कार्ये शाब्दबोधे घटान्वयोभयविषयत्वस्यावच्छेदकत्वकल्पनापेक्षया घटमात्रविषयत्वस्यावच्छेदकत्वकल्पने लाघवमिति सिद्धान्तमुपपादयति—**घटेत्यादि**। **विशेषबोधायेति**; 'घटमानय' इत्यादौ घटकर्मकत्वादिरूपविशेषबोधायेत्यर्थः। **तद्ग्रहस्यापि**; कार्यकारणभावग्रहस्यापि। **गौरवापत्तेरिति**; विशेषबोधं प्रति समभिव्याहारविशेषस्य कारणत्वे कल्प्ये कारणत्वग्रहस्यापि कारणत्वं कल्पनीयम्; समभिव्याहारविशेषस्यापि कारणत्वं कल्पनीयमिति गौरवं स्यादिति भावः। **तावतैव**; समभिव्याहारशाब्दबोधयोः कार्यकारणभावस्वीकारेणैव। वस्तुतो वाक्यस्य पदसमभिव्याहाररूपत्वात् समभिव्याहारस्य कारणत्वाङ्गीकारे वाक्यस्यापि कारणत्वमकामेनाप्यभ्युपगतप्रायं भवतीति वाक्यशक्तावेव पर्यवस्यतीति भावः।

[1] स्वीकाराच्च G.

२४. जिज्ञासापि पदार्थवाक्यार्थयोर्नियमस्य पूर्वं ग्रहात् फलविशेषदर्शने रसविशेषजिज्ञासावदुपपन्ना[1]। ननु तद्वदेव तर्ह्यत्रापि जिज्ञासानियमो न स्यादिति चेत्, इष्टापत्तिः। किंच 'अनयोः संसर्गविशेषज्ञानं मे भवतु' इतीच्छायां तादृशज्ञानधर्मिकेष्टसाधनताज्ञानस्य हेतुत्वेन तस्य च विशिष्टवैशिष्ट्यबुद्धितया विशेषणतावच्छेदकतद्विशेषज्ञानानुरोधात् ज्ञानेच्छयोः समानविषयत्वेन हेतुहेतुमद्भावाच्च विशेषस्याप्युपस्थितिरावश्यकी। न च विशेषरूपेणापि ज्ञाने सिद्धिसत्त्वात् जिज्ञासोच्छेदः, अज्ञातरूपेण तु

---

२४. यद्यन्वयांशे न शक्तिः, तर्हि संसर्गविशेषजिज्ञासा कथमुदेतीत्यत्राह—**जिज्ञासापीति**। **फलविशेषेति**; नूतफलदर्शने 'कोऽस्य रसः' इति जिज्ञासावदत्राप्यन्वयविशेषजिज्ञासोपपद्यते। न हि रसविशेषजिज्ञासादर्शनमात्रेणाम्रपदस्य रससामान्यविशिष्टे रसविशेषविशिष्टे वा फलभेदे शक्तिः प्रामाणिकैरभ्युपगम्यते; तद्वदत्रापीति भावः। **तद्वदेव**; फलविशेषदर्शन इवेति सप्तम्यन्ताद्वतिः। फलविशेषदर्शनदृष्टान्तेनान्वयविशेषजिज्ञासा प्रतिपादिता। तदेवोपपादयति—**किंचेति**। **अनयोः**; 'घटम्, आनय' इति पदयोः। **हेतुत्वेनेति**; इच्छां प्रतीष्टसाधनताज्ञानं हेतुरिति सकलतान्त्रिकसिद्धान्तः। तथाचात्रापि संसर्गविशेष इष्टसाधनमिति ज्ञानमावश्यकम्। तत्र संसर्गविशेषस्य पूर्वमसिद्धत्वे तद्धर्मिकेष्टसाधनताज्ञानं न स्यादिति तस्य पूर्वसिद्धिर्वक्तव्येति भावः। पूर्वमेव विशेषज्ञानसिद्धावनिष्टमाशङ्कते—**न चेति**। **सिद्धिसत्त्वादिति**; इच्छां प्रति सिद्धेः प्रतिबन्धकत्वात् जिज्ञासा न स्यादिति भावः। **अज्ञातरूपेणेति**; यदि विशेषरूपेण न ज्ञात इत्युच्यते तदा कारणाभावादेवेच्छा नोदियादिति

[1] दर्शनवदुपपन्ना. G.

कारणाभावादेव न जिज्ञासेति वाच्यम्। सिद्धिः स्वरूपतो न प्रतिबन्धिका। किंतु सिद्धत्वप्रकारकज्ञानमेव तथा। अत एव 'चैत्रस्य ज्ञानं भवतु' इतीच्छायामजाते च तस्य ज्ञाने 'तस्य ज्ञानं जातम्' इति सिद्धत्वज्ञानादिच्छानिवृत्तिः संगच्छते। यदि तु अन्वयसामान्ये ज्ञाते तेन विशेषान्वयस्यानुमानमित्युच्यते तर्हि अन्वयसामान्यस्यापि तथैवोपस्थितिसंभवात् प्रस्थितमन्वितशक्त्या।

३९. न चैवमनुमानेनैव संसर्गोपस्थितिसंभवेन शब्दप्रामाण्योच्छेदः; 'नानुमितं, न साक्षात्कृतम्, किंतु शब्दादेवावगतम्' इत्यनु-

---

भावः। समाधत्ते—**सिद्धिरिति**। **स्वरूपतः**; सिद्धत्वज्ञानमन्तरा वस्तुनः सिद्धत्वमेव नेच्छाप्रतिबन्धकम्। अन्यथा पर्वते वह्निसत्त्वेऽपि तदप्रत्यक्षेऽनुभवसिद्धा वह्नेरनुमित्सा न स्यादिति भावः। **अत एव**; सिद्धत्वप्रकारकज्ञानस्यैव प्रतिबन्धकत्वं, न त्वज्ञातस्यापि सिद्धत्वस्येत्यङ्गीकारादेव। अन्वयसामान्यमेवान्विताभिधानशक्त्या ज्ञायते; अन्वयविशेषस्तु पश्चादनुमानेनावसीयत इति मतमाशङ्कते—**यदीति**। समाधत्ते—**तर्हीति**। **तथैव**; अनुमानेनैव। **प्रस्थितम्**; दूरतोऽपसृतमिति भावे क्तः। **अन्वितशक्त्या**; अन्विताभिधानवादेन। अन्विताभिधानवादस्य सुतरामुच्छेद एव स्यादित्यर्थः।

३९. अत्रान्तरे नृसिंहाश्रमोद्भावितस्वावसरलाभसंतुष्टो वैशेषिकः शब्दाख्यं प्रमाणमेव निह्नोतुमना आशङ्कते—**न चेति**। **अनुमानेनैवेति**; तत्प्रयोगस्तु—घटमानयेत्यादिपदानि तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वाणि, आकाङ्क्षादिमत्पदकदम्बत्वात्, पटमानयेत्यादिपदकदम्बवदिति। तथाचानेनैवानुमानेन संसर्गज्ञानसिद्धौ ज्ञानावच्छेदकतया संसर्गसिद्धिः संभवतीति शब्दो न पृथक् प्रमाणमिति भावः। समाधत्ते—**नानुमितमित्यादिना**।

भवात्। आकाङ्क्षाज्ञाननिर्वाह्यविशेष्यविशेषणभावानुरोधाच्च तत्तद्रूपेण भानानुरोधाच्च शब्दस्यातिरिक्तप्रमाणत्वात्। 'शृणोमि, शब्दापयामि' इत्याद्यनुव्यवसायप्रयोजिकाया विलक्षणानुभवसिद्धायाः शाब्दत्वजातेस्तदवच्छिन्नाकाङ्क्षादिज्ञानहेतुत्वस्य च कल्पनावश्यकत्वेन तद्वृत्त्यनुमितित्वकल्पने व्याप्तिस्मृत्यादिकल्पने मानाभावात्, गौरवाच्च। किंच सिद्धिसत्त्वेऽपि शाब्दबोधोदयेनानुमितेश्चानुदयेन सिद्धिप्रतिबध्यतावच्छेदककोटौ शाब्दबोधातिरिक्तत्वविशेषणदाने गौरवम्। अपिच वह्न्यादेरशाब्दानुमितेः शाब्दानुमितेश्चैकदोत्पत्तिवारणाय शाब्देतरानुमितित्वावच्छिन्ने

---

**अनुभवात्**; अनुव्यवसायरूपात्। इदमुपलक्षणम्—पक्षधर्मताद्यनपेक्षयापि बोधोदयेन शब्दस्य प्रमाणान्तरत्वमवश्याभ्युपेयमिति। हेत्वन्तरमाह—**आकाङ्क्षेत्यादि**। आकाङ्क्षाज्ञानेन पदार्थानां विशेष्यविशेषणभावः प्रतीयते। शब्दप्रमाणस्याभावे विशेष्यविशेषणभावो न प्रतीयेत। न हि 'पर्वतो वह्निमान्' इत्यत्र वह्निपर्वतयोः परस्परं विशेष्यविशेषणभावोऽप्यनुमानगम्य इति भावः। **तत्तद्रूपेणेति**; घटत्वेन रूपेण घटो भासते। स च शाब्दत्व एव संगच्छते, न त्वनुमितत्व इति भावः। दोषान्तरमाह—**शृणोमीत्यादि**। **तद्वृत्तीति**; शाब्दवृत्तीत्यर्थः। दोषान्तरमाह—**किंचेति**। अयं भावः—सिषाधयिषाविरहदशायां सिद्धिसत्त्वेऽनुमितिर्नोत्पद्यते; शाब्दबोधस्तु भवतीति वैलक्षण्यस्य जागरूकतया शाब्दत्वमनुमितित्वव्याप्यमङ्गीकृत्य शाब्दातिरिक्तानुमितिं प्रति सिषाधयिषाविरहविशिष्टसिद्धिः प्रतिबन्धिकेति गुर्वी कल्पना। शब्दस्य पृथक् प्रमाणत्वे तु शाब्दत्वस्यानुमितित्वाव्याप्यतया सामान्यतोऽनुमितिं प्रति तादृशसिद्धिः प्रतिबन्धिकेति लध्वी कल्पनेति शब्दप्रामाण्यानङ्गीकारे गौरवमिति भावः। गौरवान्तरमाह—**अपिचेति**। **तत्त्वम्**; प्रतिबन्धकत्वम्। क्वचित् प्रति-

शाब्दानुमितिसामग्रीत्वेन प्रतिबन्धकत्वे गौरवम्। मम त्वनुमितित्वावच्छिन्नं प्रति शाब्दसामग्रीत्वेनैव [1]तत्त्वमिति लाघवं स्पष्टमेव। अनुमितेरसंभवाच्च। न च 'गौरस्तितावान् स्वधर्मिकान्वयबोधानुकूलाकाङ्क्षाद्याश्रयपदोपस्थापितत्वात् घटवत्' इत्यनुमानं सुलभमिति वाच्यम्, गवादेः पदोपस्थापितत्वाद्यभावग्रहदशायां 'गौरस्ति'इत्यादितोऽन्वयबोधानापत्तेः। पदजन्या हि पदार्थोपस्थितिः स्वरूपसत्येवान्वयबुद्धावुपयुज्यते; न तु ज्ञाता, प्रमाणाभावात्। पदैरनुपस्थितस्यापि तदुपस्थितत्वग्रहादन्वयधीप्रसङ्गाच्च। न च 'गौःपदमस्तित्ववद्गोज्ञानपूर्वकोच्चारणविषयः अस्तिपदसाकाङ्क्षपदत्वात्, यन्नैवं तन्नैवं यथाकाशम्' इत्यनुमानमिति वाच्यम्, गवादिपदानां ज्ञानपूर्वकोच्चरितत्वाद्यभावनिश्चयदशायां जायमानसर्वजनीनानुभवसिद्धबोधस्यासंगत्यापत्तेः[2]। गवा-

---

बन्धकत्वमित्येव पाठः। एतावता शाब्दस्थलेऽनुमितिसंभवमभ्युपेत्य कृत्वा चिन्तया विचारः कृतः। वस्तुतोऽत्रानुमितिरेव न संभवतीत्याह—**अनुमितेरिति**। व्याप्तिपक्षधर्मतादीनामसंभवादिति भावः। अनुमितिसंभवमाक्षिपति—**गौरस्तितावानिति**। अस्तितावानिति अस्तिताशब्दात् मतुप्। अस्तिताविशिष्टः, सत्ताविशिष्ट इत्यर्थः। **स्वधर्मिकेति**; स्वपदं गोपरम्; गोविशेष्यकेत्यर्थः। समाधत्ते—**गवादेरिति**। गौर्न पदोपस्थितः, किंत्वनुमेय इति हि प्रकृतो विवादः; अस्यां दशायां गोर्न पदोपस्थितत्वमिति हेतुरसिद्ध इत्यर्थः। अनुमानान्तरमप्याक्षिप्य निरस्यति—**न चेति**। गौःपदमिति पक्षः, अस्तित्ववदित्यादि साध्यम्, यथाकाशमिति व्यतिरेकदृष्टान्तः। निरासे हेतुमाह—**गवादिपदानामिति**। अस्तित्ववद्गोज्ञानपूर्वकेति ज्ञानपूर्वकत्वमुच्चारणे निवेशितम्। तथा सति यत्र ज्ञानपूर्वकत्वं विना गोपदोच्चारणं तत्र दोषः स्यादिति भावः। **आसंगत्यापत्तेरिति**;

[1] प्रतिबन्धकत्वं G.

[2] असांगत्यापत्तेः G.

दिनिष्ठमुख्यविशेष्यताशालिबोधस्यैवमप्यनुपपादनाच्च। एतेन पठितविस्मृत-शास्त्रस्य बोधादर्शनात् शक्तिस्मरणं हेतुः, उद्बुद्धशक्तिसंस्कारो वेति मतद्वयेऽपि तज्जनकतायाः शक्तित्वनये शाब्दप्रामाण्योच्छेदः। जनकताया व्याप्तिघटितत्वात् तन्नियतत्वादिज्ञाने व्याप्तिज्ञानं जातमेवेत्यनुमानविधयैव प्रामाण्यं स्यादित्यपास्तम्। जनकताघटितव्याप्तिकार्यकारणयोः सत्त्वेन तादृशज्ञायमानपदेन स्वकार्यतादृशबोधानुमितावपि विलक्षणविषयताशाल्यर्थ-बोधासंभवात्। न हि व्यवसाये यादृशी विषयता तादृश्यनुव्यवसाये।

---

असंगतस्य भाव आसंगत्यम्। "न नञ्पूर्वात्तत्पुरुषात्" (पा. ५-१-१२१) इति सूत्रे अचतुरसंगतेति संगतपदपर्युदासान्नञ्पूर्वपदादप्यसंगतशब्दात् भावप्रत्ययः। असांगत्यापत्तेरिति क्वचित्कपाठे तु संगतस्य भावः सांगत्यं, न सांगत्यमसांगत्य-मिति व्युत्पत्तिर्भाव्या। पर्युदासफलं त्वासंगत्यमित्यस्य साधुत्वसिद्धिः। अस्मिन्ननु-माने दोषान्तरमप्याह—**गवादीति**। पूर्वोक्तानुमानं हि गौःपदमिति गोपदं विशेष्यी-कृत्य प्रवृत्तम्। अस्माकं तु गोपदार्थमुख्यविशेष्यको बोध इष्टः। स च न सिध्येदिति भावः। प्रसङ्गात् भूषणकारादिभिरुक्तं दूषणं न सम्यगित्याह—**एते-नेति**। अपास्तमित्यनेनान्वयः। एतेनेति; वक्ष्यमाणहेतुनेत्यर्थः। **तज्जनकतायाः**; बोधजनकताया विवरणकारादिभिरभ्युपगतायाः। **शक्तित्वनये**; बोधकत्वमेव शक्तिरिति विवरणकारादीनां मतम्। तथाच बोधकत्वं बोधजनकत्वे पर्यवस्य-तीति जनकताघटितैव शक्तिर्वक्तव्येति भावः। तेषां मते शब्दप्रामाण्योच्छेदमेवोप-पादयति—**जनकताया इति**। **तादृशज्ञायमानपदेनेति**; व्याप्तिविशिष्टतया ज्ञाय-मानं यत् पदं तेनेत्यर्थः। ज्ञायमानस्यैव लिङ्गस्य हेतुत्वादिति भावः। **विलक्षण-विषयतेति**; 'नानुमितं, न साक्षात्कृतम्, किं तु शब्दादेवावगतम्' इति पूर्वोक्तविलक्षणविषयतेत्यर्थः। तदेवोपपादयति—**न हीति**। व्यवसाये अनुमिति-

त्रिपुटीप्रत्यक्षवादिनामपि 'अयं घटः, घटमहं जानामि' इत्येव ज्ञानाकार इत्याहुः। यदि तु—अन्विते शक्तिरित्यस्य पदान्तरार्थेनान्वित[1]-पदार्थ एव पदैरनुभाव्यते, न तु पदार्थमात्रमित्यर्थः; तथाहि—पदानामन्वयानुभवजनकत्वमेव शक्तिः; एकैकपदार्थोपस्थितिस्तु स्मृतिरूपा, एकसंबन्धिज्ञानस्यापरसंबन्धिस्मारकताया हस्तिपकादिसाधारणत्वादन्वयानुभवजनकत्वरूपस्य मूलसंबन्धस्य विद्यमानत्वादित्युच्यते, तर्हि सिद्धैव

---

विषयता, अनुव्यवसाये तु शाब्दबुद्धिविषयतेत्यर्थः। **त्रिपुटीति**; प्रत्यक्षे ज्ञाता, ज्ञेयं, ज्ञानमिति त्रयमपि विषयः। यथोक्तम्—

"भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात्।
ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो॥"

(पञ्चदशी, ११-१४)

इति। "त्रयाणां ज्ञातृज्ञानज्ञेयरूपाणां पुटानामाकाराणां समाहारस्त्रिपुटी" इति तद्व्याख्यातारः।

अन्विताभिधानमिति पदस्य सिद्धान्तिसंमतार्थाभ्युपगमे तु स्वेष्टसिद्धिरित्याह—**यदि त्विति**। अस्य 'उच्यते' इत्यनेनान्वयः। **पदान्तरार्थेनेति**; अन्वितपदस्य नान्वयसामान्यविशिष्टोऽर्थः, येनोक्ता दोषाः प्रसजेयुः, किंतु इतरपदार्थेनान्वयविशिष्टोऽर्थ इति भावः। **न तु पदार्थमात्रमिति**; 'घटमानय' इत्यत्र घटपदस्यानयनक्रियान्वितघट एवार्थः। न तु घटमात्रमित्यर्थः। तदेवोपपादयति—**तथाहीति**। स्वेष्टसिद्धिमेवोपपादयति—**तथाहीति**। **सा शक्तिः**; अन्विताभिधानशक्तिः। **ततः**; एकपदात्। **अन्यत्र**; मञ्जूषादौ।

[1] अन्वय G.

वाक्यशक्तिः । तथाहि—सा शक्तिर्नैकपदे, केवलघटपदादप्यन्वयानुभवापत्तेः । 'अन्वितो घटः' इति बोधस्तु ततोऽनुभवविरुद्ध एव । समुदाये तत्स्वीकारे तु सिद्धमस्मन्मतमित्यन्यत्र विस्तरः ।

३६. यत्तु पदार्थास्तत्स्मृतिर्वा शाब्दबोधे हेतुः ; न तु पदज्ञानम्, व्यभिचारात् । तथाहि—अश्वत्वाद्यनुपहितश्वेतत्वं पश्यन् तस्मिन् देशे हेषाशब्देनाश्वं खुरशब्देन गमनं चानुमिमानोऽनुपलब्धि-

---

३६. वाक्यशक्तिविषये भाट्टमतं निरसितुं तदनुवदति—**यत्त्वित्यादिना**। एवं हि ते मन्यन्ते—पदज्ञानं न वाक्यार्थप्रतीतावुपयुज्यते । किं तु तत् पदार्थप्रतीत्युपजननेनैव पर्यवसितसामर्थ्यम् । पदार्थेभ्यस्तु वाक्यार्थप्रत्यय इति । यदाहुः—

"पदार्थानां तु मूलत्वं दृष्टं तद्भावभावतः ।
सत्यं न वाचकं वाक्यं वाक्यार्थस्योपपद्यते ॥"
(श्लोकवार्तिकम्, वाक्या. श्लो. १११)

इति । अपि चान्वयव्यतिरेकाभ्यामेवमवगम्यते पदार्थपूर्वको वाक्यार्थ इति । यो हि मानसादपचारात् श्रुतेष्वपि पदेषु पदार्थान्नावगच्छति, नावगच्छत्येवासौ वाक्यार्थम् । यस्त्वश्रुतेष्वपि पदेषु प्रमाणान्तरतः पदार्थान् जानीयात् जानात्येवासौ वाक्यार्थम् । अतो वाक्यार्थज्ञाने पदार्थज्ञानमुपयुज्यत इति । **तत्स्मृतिर्वा** ; पदार्थस्मृतिर्वा । व्यभिचारमेवोपपादयति—**तथाहीति** । **अश्वत्वाद्यनुपहितेति** ; अश्वत्वाद्युपाधिरहितेत्यर्थः । **अनुपलब्धिप्रमाणेनेति** ; यदि स्यादनश्वस्तर्हि उपलभ्येत ; यतो नोपलभ्यते ततो नास्तीत्येतादृशतर्कानुगृहीतेनेत्यर्थः ।

प्रमाणेन तत्प्रदेशे श्वेतत्वाद्यन्वययोग्यवस्त्वन्तरस्याभावं जानन् पुरुष एवं कल्पयति—[1]अन्यान्वयसाकाङ्क्षाणां श्वेतत्वादीनां मिथोऽन्वयं विनानुपपन्नत्वधीसहकृतमाकाङ्क्षाज्ञानादिसहकृतं च ज्ञानं तेषां मिथोऽन्वयशाब्दबोधे कारणमिति । अनुपपन्नत्वधीश्चैवम्—श्वेतत्वं तद्देशे दृश्यमानमश्वान्यासंसर्गित्वेन प्रतीयमानमश्वसंसर्गित्वं विनानुपपन्नमिति । एवं धावनेऽप्यनुपपत्तिर्बोध्या । अयं भावः—अर्थज्ञानं शाब्दसामान्ये कारणम् । विशेषकारणं तु क्वचित्पदज्ञानादिकम् । तत्कार्यतावच्छेदकं च तदुत्तरशाब्दत्वम् । क्वचिदनुपपत्तिज्ञानम् । तत्कार्यतावच्छेदकं च तदुत्तरशाब्दत्वमिति न व्यभिचारः । उक्तं च—

"पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥"

(श्लोकवार्तिकम्, वाक्या, श्लो. ३९८)

---

श्वेतत्वादीति; आदिशब्देन हेषाखुरशब्दयोः संग्रहः । **कल्पयति**; अन्यथानुपपत्तिप्रमाणेन जानीते । **अन्यान्वयसाकाङ्क्षाणामिति**; गुणजातिक्रियाणां नियमेनार्थान्तरान्वयसापेक्षत्वादिति भावः । **तेषाम्**; श्वेतत्वादीनाम् । **पश्यत इत्यादि** । **आरूपम्**; अव्यक्तरूपम्, अव्यक्ताश्रयमिति यावत् । इत्थमुत्थापितं मतं निरस्यति—**तन्नेति** । अयमत्राभिसंधिः—न पदार्थेभ्यो वाक्यार्थावगतिरनुभवसंवादिनी, अपितु वाक्यादेव । अत एव तस्य वाक्यार्थत्वेन प्रसिद्धिः, न तु पदार्थर्थित्वेन । यदप्युक्तमन्वयव्यतिरेकाभ्यां पदार्थनिमित्तकत्वं वाक्यार्थस्यावगम्यत इति, तत्र पदार्थसंसर्गस्वभावत्वात् वाक्यार्थस्य सत्यं तत्पूर्वकत्वमिष्यत एव । न

[1] अन्योन्य. G.

इति । तन्न; अनुमानेनैव निर्वाहात्; 'शाब्दयामि' इत्यनुव्यवसाया-भावाच्च ।

३७. नन्वेवमपि वर्णसमूहरूपपदवाक्ययोर्ज्ञानमसंभवि, उत्पत्तिपक्षे अभिव्यक्तिपक्षे वैकदा तदभावात्, तयोः क्रमिकत्वादिति चेत्—न, उत्तरवर्ण-प्रत्यक्षकाले अव्यवहितोत्तरत्वसंबन्धेन पूर्वपूर्ववर्णवत्त्वं तदुत्तरवर्णे गृह्यते । एवं तदुत्तरवर्णप्रत्यक्षकाले उपस्थितिविशिष्टतद्वर्णवत्त्वं तदुत्तरवर्णे गृह्यते । एवमुत्तरोत्तरवर्णप्रत्यक्षकाले पूर्वपूर्वमुपस्थितिविशिष्टतद्वर्णवत्त्वं गृह्यत इति

---

तावता पदार्थानां वाक्यार्थहेतुत्वं सिध्यति । मानसे चापचारे सति पदानामपि ग्रहणं नास्त्येव, कुतो वाक्यस्य ग्रहणम्? कुतस्तरां पदार्थवाक्यार्थयोः? यतः क्षणान्तरे समाहितचित्तः स वक्ति—'नाहमेतद्भवदुदीरितमश्रौषम्। न वावगच्छामि भवद्विवक्षितमर्थम् । अन्यत्र मे मनोऽभूत् । तत्पुनर्ब्रूहि' इति । इतरथा हि पदानि स्मृत्वा तदर्थमेवावगच्छेत् । न पुनस्तानि पृच्छेत् । यदपि 'पश्यतः श्वेतमारूपम्' इति स्वपक्षसाधकतयोपन्यस्तं तदपि दुर्बलं न हस्तमवलम्बयति । तथाहि—किं प्रत्यक्षेण शुक्लो गौर्गच्छन्न दृश्यते? स किं 'शुक्लो गौर्गच्छति' इति वाक्यार्थो न भवति? प्रत्यक्षप्रतिभासात्तु प्रत्यक्ष एवासौ, न वाक्यार्थ इत्युच्यते । एवं श्वेतोऽश्वो धावतीत्यानुमानिकोऽयं प्रत्ययः, पर्वते वह्निरितिवत् । किं बहुना, कथंचिदपि वाक्यश्रवणं विना न वाक्यार्थप्रत्याशा भवितुमर्हतीति । तदेतत्सर्वं मनसि निधायाह—**अनुमानेनैवेति** । आनुमानिकत्वे सामञ्जस्यमप्याह—**शाब्दयामीति** ।

३७. एवं सप्रभेदं सखण्डस्फोटमुपपाद्य तत्र साधारण्येन संभावनीयान् दोषानाशङ्क्य निराचष्टे । तत्र प्रथमं दोषाननुवदति—**नन्वेवमपीति** । एवमपि; पूर्वोक्तरीत्या वाक्यशक्तिस्थापनेऽपि । असंभवमेवोपपादयति—**उत्पत्तिपक्ष इति** । **एकदा**; एककालावच्छेदेन एकबुद्ध्यारोहेण च । तत्र हेतुमाह—**तयोरिति**;

तयोः सुग्रहत्वात्। अतः 'सरो रसः, नदी दीनः, जरा राजा' इत्यादौ बोधविशेषः।

यत्तु प्रत्येकवर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णप्रत्यक्षसामग्र्या सदसदनेकविषया पदप्रतीतिः स्मृतिप्रत्यक्षात्मिका। अनुभवक्रमोपहितानामेव तेषां स्मृत्यावगाहनान्न क्रमव्युत्क्रमयोरविशेष इति—तन्न, अनुभवस्मृत्योः क्रमे नियमाभावात्। दृश्यते च प्रपूर्वेद्युरनुभूतमस्मृत्वापि पूर्वेद्युरनुभूतस्य स्मरणम्। किंच संस्कारस्मृत्योः समानविषयत्वात् क्रमस्य च संस्काराविषयत्वेन स्मरणाविषयत्वादित्याहुः।

अत्रेदं बोध्यम्—निरूपितं स्फोटभेदत्रयं न वादिभेदेन व्यवस्थितम्। किं तु बोद्धृभेदेन। कस्यचित्प्रकृतिप्रत्यययोः प्रत्येकं तत्तदर्थे शक्ति-

---

पदवाक्यशब्दाभिलप्ययोर्वर्णसमूहयोरित्यर्थः। पक्षान्तरमनुवदति—**यत्त्विति**। **स्मृतिप्रत्यक्षात्मिकेति**; पूर्वपूर्ववर्णानां स्मृतिः। अन्त्यवर्णस्य प्रत्यक्षमिति भावः। 'नदी दीनः, सरो रसः' इत्यादावविशेषमाशङ्क्य समाधत्ते—**अनुभवक्रमेत्यादि**। यद्यपि स्मृतौ वर्णा अवगाह्यन्ते, तथापि ते येन क्रमेणानुभूतास्तेनैव क्रमेणावगाह्यन्त इति न दोष इति भावः। एवमनूदितं पक्षं निरस्यति—**तन्नेति**। निरासे हेतुमाह—**अनुभवेति**। येन क्रमेण पदार्था अनुभूतास्तेनैव क्रमेण तेषां स्मरणं नान्यथेति न नियन्तुं शक्यत इति भावः। कुत इत्याशङ्क्य व्युत्क्रमेणापि स्मरणं प्रदर्शयति—**दृश्यते चेति**। स्मृतौ क्रमस्य नैव भानमित्याह—**किंचेति**।

पूर्वोक्तानां त्रयाणां स्फोटानां व्यवस्थामाह—**अत्रेदमित्यादिना**। **न वादिभेदेनेति**; वैयाकरणानामयम्, नैयायिकानामयम्, मीमांसकानामयमिति न

ग्रहात् बोधेन, कस्यचित्पारिभाषिकसुबन्तादिपदे तद्ग्रहात् बोधेन, कस्यचित् तत्समुदाये तद्ग्रहात् बोधेन त्रयाणामप्यावश्यकत्वात्। कार्य-कारणभावे व्यभिचारस्तु अव्यवहितोत्तरत्वादिनिवेशेन वार्यः। इयांस्तु विशेषः—सर्वस्यापि तत्तत्संसर्गविषयः शक्तिग्रहस्तत्तत्समुदाये। सोऽपि विजातीयबोधजनक एव, न स्मारक इति तत्त्वम्।

इति सखण्डस्फोटनिरूपणम्।

## अथाखण्डस्फोटनिरूपणम्।

३८. वर्णमालायाम् 'एकं पदम्, एकं च वाक्यम्' इत्यादि-प्रतीतेः 'तदेवेदं पटपदं, तदेवेदं घटमानयेति वाक्यम्' इत्यादिप्रतीतेश्च

---

वादिभेदेन नैयत्यमित्यर्थः। तर्हि कथं व्यवस्थेत्यत्राह—किंत्विति। तदेवोप-पादयति—कस्यचिदित्यादि।

इति सखण्डस्फोटनिरूपणम्।

३८. एवं सखण्डपदवाक्यस्फोटयोस्तत्त्वं निरूप्यानन्तरमखण्डपद-वाक्यस्फोटयोस्तत्त्वं निरूपयितुमुपक्रमते—वर्णमालायामिति। प्रतीतेरिति। प्रतीतिबलाद्धि सर्वत्र वस्तुस्थितिः। अतः 'एकं पदम्, एकं वाक्यम्' इत्यादि-

वर्णातिरिक्तमेकमखण्डं प्रकृतिप्रत्ययादिविभागरहितं पदं वाक्यं च वर्ण-व्यङ्ग्यमवश्यं स्वीकार्यम्। न हीयमेकत्वधीर्वर्णविषयेति युक्तम्, वर्णानामनेकत्वात्। न च 'एकं वनम्' इतिवत् सा, वनराश्यादेरप्यतिरिक्तत्वात्।

---

प्रतीतेर्वर्णव्यतिरिक्तमखण्डं पदं वाक्यं चाङ्गीकरणीयमिति भावः। तर्हि देवदत्तोच्चारितमेकं पटपदम्, यज्ञदत्तोच्चारितमन्यत् पटपदं स्यादिति शङ्कायामाह— **तदेवेदमिति**। यत् पटपदं देवदत्तेनोच्चारितं तदेव यज्ञदत्तेनोच्चारितमिति प्रतीतेः पटपदं भिन्नभिन्नपुरुषोच्चारितमप्येकमेवेति भावः। **प्रकृतिप्रत्ययादिरहितमिति**; नन्वेवं महता प्रयासेन पणिनिना कृतानि सूत्राणि निरर्थकानि प्रतारकाणि च भवेयुरिति चेन्न, बालव्युत्पादनार्थमसन्तमपि प्रकृतिप्रत्ययादिविभागं कल्पयित्वा पाणिनिना व्याकरणस्य प्रणयनात्। यदाहुः—

> "उपायाः शिक्षमाणानां बालानामुपलालनाः।
> असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥"
>
> (वाक्यपदीयम्, २-२४०)

इति। **वर्णव्यङ्ग्यमिति**; व्यञ्जकत्वेन वर्णानामुपयोग इति भावः। वस्तुतस्तु वर्णव्यञ्जकत्वेनावश्याभ्युपेयानां ध्वनीनामेव 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायेन स्फोटव्यञ्जकत्वाभ्युपगमात् वर्णव्यङ्ग्यमित्यत्र न वर्णानां व्यञ्जकत्वे नैर्भर्यं ग्रन्थकर्तुः; किंतु वर्णैर्वा ध्वनिभिर्वा व्यङ्ग्यमित्यर्थो विवक्षितः। पदवाक्ययोर्वर्णभिन्नत्वं प्रत्येकमेकत्वं च साधयति—न **हीयमिति**। **एकं वनमितिवदिति**; यथा वृक्षाणामनेकत्वेऽपि तत्समुदयस्य वनशब्दवाच्यत्वमेकत्वं च प्रतीयते तथा प्रकृतेऽपि वर्णानां बहुत्वेऽपि पदवाक्यशब्दवाच्यत्वं तत्समुदायस्यैकत्वाश्रयत्वं च भविष्यतीति भावः। समाधत्ते—**वनराश्यादेरपीति**। यद्यपि वृक्षसमुदायस्य वनमिति संज्ञा. अथापि न वृक्षा एव वनम्,

किंच तत्रैकक्लृप्तदेशावच्छिन्नत्वस्योपाधेरेकत्वेन सोपाधिस्तथा प्रतीतिरुपपद्यते। प्रकृते चोपाधेरसंभवः। न चैकार्थबोधहेतुत्वं तथा, व्याससमासयोरप्यैक्यापत्तेः। नाप्यविशिष्टैकार्थप्रत्ययजनकत्वम्, समासे वाक्ये चासंभवापत्तेः। अन्यथा वर्णेष्वप्यवयवानुभवसत्त्वात्तदतिरिक्तो वर्णोऽपि न सिध्येत्। यथा ऋकारे रेफः, ऌकारे लकारः, एकारैकारयोरकार इकारश्च। ओकारौकारयोरकार उकारश्च। दीर्घादिष्वपि ह्रस्वाकारादयः। किं बहुना? वर्णमात्रे "तस्यादित उदात्तम्—" (पा १-२-३२) इत्यादिनावयवसत्त्वं गम्यते। अत एव वर्णावयवानां वर्णग्रहणेन ग्रहणाग्रहणपक्षौ "ए ओङ्, ऐ औच्" (शिवसूत्रम् ३, ४) इति सूत्रभाष्ये व्युत्पादितौ। यद्येक इति

---

तथा सति 'वन्यो वृक्षः' इति भवार्थे तद्धितो न युज्येत। न हि वृक्षे भवो वृक्षः। किंतु वने भवः। न हि कश्चित् कस्मिंश्चित् वृक्षमूले संचरन् पुरुषो वनेचर इत्युच्यते इति भावः। वनराश्यादेरनतिरिक्तत्वेऽपि 'एकं वनम्' इत्यादिव्यावहारे कारणमाह—**किंचेति**। एकदेशावच्छिन्ना वृक्षा वनमित्युच्यन्ते। प्रकृते न च तथेति भावः। **तथा**; उपाधिः। **ऐक्यापत्तेरिति**; एकार्थबोधकत्वादिति भावः। **असंभवापत्तेरिति**; समासस्य वाक्यस्य च प्रत्येकं विशिष्टैकार्थधीजनकतया 'एकं समस्तं पदम्, एकं वाक्यम्' इत्यैक्यप्रतीतिर्न स्यादिति भावः। यद्येवं युक्तिविरोधेऽपि हठात् वार्णा एव पदं वाक्यं चेत्युच्यते, तदा प्रतिबन्दीमाह—**अन्यथेति**। वर्णेष्ववयवोपलम्भस्थलं दर्शयति—**यथेति**। **वर्णमात्रे**; वर्णसामान्ये। **व्युत्पादिताविति**; "वर्णैकदेशा वर्णग्रहणेन चेत् संध्यक्षरे समानाक्षरविधिप्रतिषेधः" (महाभाष्यप्रत्याहाराह्निकम्)

प्रतीत्यावयवातिरिक्तवर्णसिद्धिः, तर्हि प्रकृतेऽपि समम्। किंचैवम् 'एकः पटः' इत्यादिव्यवहारस्यापि तन्तुसमुदायेनोपपत्तौ तत्राप्यतिरिक्तावयव्यसिद्ध्यापत्तिः। यदि तु वर्णेष्ववयवा न सन्त्येव; तदवभासस्तु तत्तदुच्चारणविशेषजन्यतत्तद्वर्णसमानाकारक्रमिकध्वनिविशेषसंतानोपरागोपाधिः, तर्हि पदे वर्णावभासोऽपि ध्वनिविशेषसंतानोपरागोपाधिरिति ममापि समम्। तदुक्तं हरिणा—

---

इत्यादिवार्तिकव्याख्यानावसर इति भावः। **प्रकृतेऽपि**; पदवाक्यविषयेऽपि। अतिरिक्तानङ्गीकारे दोषमाह—**किंचैवमिति**। **तत्रापि**; पटव्यवहारेऽपि। जपाकुसुमोपरागात् स्फटिके लौहित्यवत् ध्वनिविशेषसंतानोपरागात् वर्णेष्ववयवावभास इत्युच्यते चेत्, तत् पदवाक्ययोरपि तुल्यमित्याह—**यदि त्वित्यादिना**। **तदवभासस्तु**; अवयवावभासस्तु। तत्राभियुक्तसंमतिमाह—**तदुक्तमिति**। यद्यपि पदे सावयवत्वमेव प्रकृते निषेद्धव्यम्; वर्णानां सावयवत्वं तु न कस्यापि संमतमिति तन्न निषेद्धव्यमिति "वर्णेष्ववयवा न च" (वाक्यपदीयम्, १-७३) इत्युक्तिरसंगता, तथापि पदेष्ववयवाभावे दृष्टान्ततया तदुक्तिसंभवः। विमते विषये सिद्धान्तदृढीकरणार्थं सर्वसंप्रतिपन्नो हि विषयो दृष्टान्ततयोपादीयत इति संप्रदायः। यथा—

"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्॥"

(भगवद्गीता, २-१२)

इति भगवद्गीतावचने जनाधिपानां नित्यत्वे भगवान् स्वस्य नित्यत्वं दृष्टान्तीकरोति—न त्वेवाहं जातु नासमिति। अन्यथा अर्जुनस्य भगवन्नित्यत्वे विशयलेशाभावात् तद्वचनमप्रस्तुतमसंगतं भवेत्। तद्वदत्रापि। अत एव वर्णेष्व-

"पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च[1] ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥"

(वाक्यपदीयम्, १-७३)

इति । अखण्डत्वरूपधर्मैक्यात्पदवाक्ययोरत्यन्तं भेदो नास्तीत्यर्थः ।

३९. ननु—वर्णसत्त्वे मानाभावः; वक्ष्यमाणरीत्यानुभवेन च वर्णस्थले ध्वनीनामावश्यकत्वेन तैरेव स्फोटाभिव्यक्तिसंभवे ध्वनिस्फोटयो-

---

वयवा इव" इति पाठान्तरं समुपलभ्यमानं संगच्छते । प्रविवेकः; भेदः । अखण्डत्वरूपधर्मान्वयविषये पदस्य वाक्यस्य च न कोऽपि भेद इत्यर्थः । अत्यन्तं प्रविवेको नास्तीत्यन्वये स्वल्पो भेदोऽस्तीति प्रतीयेत; तच्चानिष्टम् । अतः प्रविवेकोऽत्यन्तं नास्तीति नञर्थे अत्यन्तमित्यस्यान्वयं प्रदर्शयति—**अखण्डेत्यादिना** । अत्यन्तं भेदो नास्ति; भेदः सुतरां नास्तीत्यर्थः ।

३९. **वक्ष्यमाणरीत्येति**; व्यञ्जकत्वेन ध्वनीनामावश्यकत्वमिति वक्ष्यमाणरीत्येत्यर्थः । **अनुभवेनेति**; कण्ठादिजन्यत्वस्य तारत्वमन्द्रत्वादिरूपधर्मान्वयस्य च ध्वनिष्वेवानुभवादित्यर्थः । यदि वर्णाः कण्ठादिस्थानजन्याः, तारत्वादयश्च वर्णधर्मा इत्युच्यते, तदा वर्णानां जन्यत्वात् सविकारत्वाच्चानित्यत्वं प्रसजेदिति सिद्धान्तव्याकोप इत्यर्थः । यदाह—

"ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥"

(महाभाष्यम्, १-१-७०)

इति । शब्दो द्विधा—व्यञ्जको व्यङ्ग्यश्च । शब्दानां व्यङ्ग्यानां संबन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते । व्यङ्ग्यस्त्वभिन्नकाल एवेत्यर्थ इति तद्व्याख्यातारः ।

[1] इवेति पाठान्तरम् ।

र्मध्ये वर्णाङ्गीकारे गौरवादिति चेत्, भवन्तु त एव वर्णाः। दूरगत-कोलाहलश्रवणे घत्वादीनां श्रूयमाणध्वनिगतानां दूरत्वदोषेणानभिव्यक्ति-संभवात्। त एव च तद्व्यञ्जकाः। तदेवम् 'एकस्माद्वाक्यात् पदाद्वा अयमर्थो बुद्धः' इत्यनुभवादखण्डः स्फोटो वाचकः। स च तत्तत्पद-वाक्यभेदेनानन्त इत्येके। परे तु स लाघवात्सर्वत्रैकः। प्रतीतिवैलक्षण्यं च व्यञ्जकवैलक्षण्यकृतम्। उक्तं च हरिणा—

"यथा मणिकृपाणादौ रूपमेकमनेकधा।
तथैव ध्वनिषु स्फोट एक एव विभिद्यते॥"

(स्फोटतत्त्वनिर्णयः, श्लो. ११)

इति। न च स्फोटस्यैकत्वात् भेदनिबन्धनसादृश्यव्यवहारानापत्तिः, व्यञ्जक-भेदेनैव भेदोपपत्तेरित्याहुः।

---

तैरेव; ध्वनिभिरेव। अनूदितामाशङ्कां परिहरति—**भवन्त्विति**। **त एव**; ध्वनय एव। ननु यदि ध्वनय एव वर्णाः, तदा वर्णगताः कत्वगत्वादयो ध्वनौ कुतो नानुभाव्यन्त इति शङ्कां परिहरति—**दूरगतेत्यादिना**। ध्वनिष्वपि कत्वगत्वादयो विद्यन्त एव। परं तु ते दूरत्वदोषेण नाभिव्यज्यन्त इति भावः। **त एव तद्व्यञ्जका इति**; ध्वनय एव स्फोटव्यञ्जका इत्यर्थः। व्यक्तिपक्षमवलम्ब्याह—**स चेति**। अखण्डस्फोटश्चेत्यर्थः। अत्र मतान्तरमाह—**परे त्विति**। तत्राभियुक्तोक्तिसंवादमाह—**उक्तं चेति**। **हरिणेति**; कारिकेयं मुद्रिते वाक्यपदीयकोशे न दृश्यते। **भेदनिबन्धनेति**; तद्भिन्नत्वे सति तद्गत-भूयोधर्मवत्त्वं हि तत्सादृश्यम्। तथाच सादृश्यस्य भेदगर्भितत्वमेवायातीति भावः। **सादृश्यव्यवहारेति**; 'घटपदमिव पटपदं स्पष्टमर्थं प्रतिपादयति' इत्यादौ घटपटपदयोः सादृश्यव्यवहारेत्यर्थः। समाधत्ते—**व्यञ्जकेति**; व्यञ्जकध्वनिभेदात् व्यङ्ग्ये स्फोटेऽपि भेदप्रतीतिर्युज्यत इत्यर्थः।

४०. अत्रेदं बोध्यम्—अर्थैर्गृहीतसंबन्धेन प्रागुक्तरीत्या गृहीतक्रमकेण वर्णसमुदायेन व्यञ्जितादर्थविशेषगृहीतसंबन्धादेव स्फोटादर्थप्रत्ययः। पर्यायेषु चानेक एव स्फोटः। गौरवं तु प्रामाणिकत्वान्न दोषावहम्। एतेन—किमयं स्फोटः स्वरूपतोऽर्थप्रत्यायकः, प्रतीतो वा?

---

४०. एवं वर्णाभिव्यङ्ग्यमेकमखण्डस्फोटं निरूप्य व्यञ्जकेषु वर्णेषु वक्तव्यान् विशेषानाह—**अत्रेदमित्यादिना**। 'अत्रेदं बोध्यम्' इत्यस्य 'इति कैयटादयः' इत्युपरितनेनान्वयः। **अर्थैर्गृहीतसंबन्धेनेति**; स्फोटस्य वाचकत्वमिति पक्षेऽपि तद्व्यञ्जकानां वर्णानां समुदायेऽप्यर्थसंबन्धोऽङ्गीकरणीयः। तथाहि—श्रूयमाणेऽपि शब्दे द्विरूपस्थले किमयं हालाहलशब्दः, उत हलाहलशब्दः, किमयं मरकतशब्दः, आहोस्वित् मरतकशब्द इति वर्णक्रमविशेषसंदेहे सत्युभयथापि गरलादिबोधवताम् 'इदमेकं पदम्' इत्यवधारणं न स्यात्; तद्विषयस्य स्फोटस्याभिव्यञ्जकवर्णावलीसंदेहेनानभिव्यक्तेः। ततश्च स्फोटवादिनापि वर्णावल्यां तत्तदर्थसंबन्धोऽङ्गीकार्य इति। **प्रागुक्तरीत्येति**; पूर्वपूर्ववर्णानुभवजनितसंस्कारैरित्यादिना प्रागुक्तरीत्येत्यर्थः। **पर्यायेषु चेति**; घटकलशादिपर्यायेषु तत्तद्वर्णसमुदायाभिव्यङ्ग्यः स्फोटो भिन्नभिन्न एवाङ्गीक्रियते, एकत्वे कतरस्मिन् शक्तिकल्पनमिति विनिगमनाविरहात्। एवं स्वेषां सिद्धान्तमुपवर्ण्य प्रसङ्गात् स्फोटाङ्गीकारे न्यायसुधायां जयतीर्थैर्न्यायरक्षामणिपरिमलयोरप्पयदीक्षितैश्चोद्भावितान् दोषांस्त एव निराचक्षते—**एतेनेति**; पूर्वमुपवर्णितसिद्धान्तेनेत्यर्थः। **किमयं स्फोट इति**[1]; स्फोटः स्वरूपसन्नेव किमर्थप्रतीतिमुपजनयति चक्षुरिव घटप्रतीतिम्, उत प्रतीतो धूमज्ञानमिव वह्निज्ञानमिति स्फोटनिराकरणाय प्रथमो

[1] *cf. Anuvyākhyānanyāyasudhā*—Fol. 87 (*b*) Madhva vilas Book Depot edition, Kumbakonam.

नाद्यः, सर्वदार्थबोधापत्तेः । अन्त्ये 'एकं पदम्' इत्यादि प्रत्यक्षं तद्ग्राहकं वाच्यम् । तत्र किमयं प्रत्ययो वर्णानवगाहते, न वा? आद्ये तु तेषामेव वाचकता, आवश्यकत्वात् । अन्त्ये, प्रतीतिबाध एवेति । किं च वर्णव्यङ्ग्यः स्फोट इत्युक्तम् । तत्र किं वर्णावली तत्तदर्थैरगृहीतसंबन्धा स्फोटव्यञ्जिका? गृहीतसंबन्धा वा? नाद्यः, काव्यादिश्रवणे तत्तदर्थैरगृहीतसंबन्धस्यापि 'इदमेकं पदम्, इदमेकं वाक्यम्' इत्यादिस्फोटप्रतीत्यापत्तेः । नान्त्यः; तैरेव बोधोपपत्तावतिरिक्ततत्स्वीकारस्य वैयर्थ्यापत्तेः ।

---

विचारः । तत्र स्वरूपसन्निति पक्षे दोष उच्यते—सर्वदेति । नित्यतयाभ्युपगतस्य स्फोटस्य सर्वदा विद्यमानत्वात् घटपदाश्रवणेऽपि घटबोधः स्यात् । प्रतीत इति विकल्पे दोष उच्यते—**अन्त्य इति । प्रत्यक्षमिति**; श्रावणप्रत्यक्षमित्यर्थः । वर्णानवगाहते न वेति तत्रैव विकल्पद्वयम् । तत्र वर्णावगाहनपक्षे दोषः—**आद्य इति । तेषामेव**; वर्णानामेव । **आवश्यकत्वादिति**; प्रतीतस्यैव स्फोटस्य वाचकत्वमिति पक्षोपपादनार्थं वर्णावगाहनमपि वक्तव्यम्; तथा चावश्यकत्वात् तेषामेव वाचकत्वमस्त्वित्यर्थः । वर्णानवगाहनपक्ष आह—**अन्त्य इति । प्रतीतिबाध एवेति**; वर्णानामेव श्रवणात् प्रतीतौ बहुमानवता त्वया ते नापलापार्हा इति भावः । तस्मात् सर्वदा स्फोटस्य वाचकत्वं न संभवतीति विचारेऽस्मिन्निर्गलितोऽर्थः । द्वितीयो विचार अनूद्यते—**किंचेत्यादिना**[1] । **वर्णव्यङ्ग्यः**; वर्णैर्व्यङ्ग्यः । वर्णावल्या व्यञ्जकत्वं किमर्थैः संबन्धमगृहीत्वा, उत गृहीत्वेति विकल्पः । प्रथम आह—**काव्यादीति** । द्वितीय आह—**तैरेवेति**; वर्णैरेवेत्यर्थः । ननु स्फोटानभ्युपगमेन वर्णानामेव वाचकत्वे 'एकं पदम्, एकं वाक्यम्'

[1] Cf. *Parimala*, p. 330 Nirnayasagar Press edition, Bombay, 1917.

एकत्वप्रतीतेश्च एकार्थबोधहेतुत्वरूपैकधर्ममादायैवोपपत्तेर्नानया तत्सिद्धिः स्यात्। न च 'तदेवेदं पदम्' इत्यादिप्रतीत्या तत्सिद्धिरिति वाच्यम्। पूर्वनखादिनाशोत्तरं पुनरुत्पन्ने नखादौ 'तदेवेदं नखम्, त एवेमे केशाः, स एवायं समूहः' इत्यादिवत्सादृश्येनैवोपपत्तेः। अतिरिक्तनखादिकमनुभवविरुद्धमिति चेत्, 'गौः' इत्यादावपि गकारौकारविसर्गातिरिक्तः स्फोटोऽप्यनुभवविरुद्ध इति तुल्यम्। किंच पर्यायशब्देष्वेकः स्फोटः, नाना वा? नाद्यः; घटकलशादिपर्यायाभिव्यक्तस्फोटे गृहीतशक्तिकस्य

---

इति प्रतीतिर्निरालम्बना स्यात्, वर्णानामनेकत्वादित्यत्राह—**एकत्वप्रतीतेश्चेति**। **एकार्थबोधहेतुकेति**; "अर्थैकत्वादेकं वाक्यम्" (मीमांसा सू. २-१-४६.) इति सिद्धान्तादिति भावः। **अनया**; एकत्वप्रतीत्या। **तत्सिद्धिः**; वर्णातिरिक्तस्फोटसिद्धिः। ननु तथापि 'तदेवेदं पदम्' इति प्रत्यभिज्ञानं वर्णवादिनामनुपपन्नम्, वर्णानां नश्वरत्वादित्याशङ्क्य समाधत्ते—**न चेति**[1]। **प्रतीत्या**, प्रत्यभिज्ञया। **तत्सिद्धिः**; नित्यस्य स्फोटस्य सिद्धिः। सा प्रत्यभिज्ञा सादृश्यनिबन्धनेति समाधत्ते—**पूर्वनखादीति**। **उपपत्तेरिति**; अन्यथा लूनपुनर्जातनखकेशादिष्वपि प्रसिद्धनखकेशसंतानाद्यभिव्यङ्ग्यमखण्डं नखकेशादिकं कल्पनीयं स्यादिति भावः। ननु तदतिरिक्तमखण्डं नखकेशादिकमनुभवविरुद्धमिति तत्र न तथा कल्प्यत इति न सा प्रतिबन्दीति चेत्, तत् प्रकृतेऽपि सममित्याह—**गौरित्यादावपीति**। एवंच वर्णातिरिक्तः स्फोटो नाभ्युपगन्तव्य इति निर्गलितोऽर्थः। विचारान्तरमनुवदति—**किंचेति**[2]। **पर्यायशब्देष्विति**; घटकलशादिशब्देष्वित्यर्थः। एक इति पक्षे

[1] Cf. *Nyāyarakṣāmaṇi* p. 164 Kumbakonam edition.

[2] Cf. *Parimala* pp. 328 and 329. Nirnayasagar Press edition. Bombay, 1917.

पुंसोऽप्रसिद्धपदश्रवणेऽप्यर्थप्रतीत्यापत्तेः, प्राग्गृहीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यञ्जनात्। न च तत्तत्पर्यायाभिव्यक्तस्फोटे शक्तिग्रहस्तत्तत्पर्याय-श्रवणेऽर्थधीहेतुरिति वाच्यम्, एवं हि प्रतिपर्यायं शक्तिग्रहावश्यंभावे तत्तत्पर्यायगतशक्तिग्रहहेतुताया एव युक्तत्वात्; तव तु तत्तत्पर्यायाभि-व्यक्तगतशक्तिग्रहत्वेन हेतुत्वे शक्ततावच्छेदकगौरवात्। नान्त्यः; अनन्त-पदार्थानां तेषु शक्तेषु कल्पनामपेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनस्य लघुत्वात्। अपिच वर्णानां प्रत्येकं व्यञ्जकत्वम्? समुदितानां वा? नाद्यः,

---

दोषमाह—घटकलशेत्यादि। अप्रसिद्धपदेति; कुम्भपदेत्यर्थः। तेन हि घटक-लशपदाभिव्यक्त एव स्फोटे शक्तिर्गृहीता, न तु कुम्भपदाभिव्यक्त इति तस्या-प्रसिद्धत्वम्। **प्राग्गृहीतेति**; घटकलशाभिव्यक्तस्यैवेत्यर्थः, सर्वत्र स्फोटस्यै-कत्वाङ्गीकारादिति भावः। स्फोटेऽपि वर्णानुगममङ्गीकृत्य दोषाभावमाक्षिप्य प्रतिक्षिपति—न चेति। सर्वत्र बोधे शब्दानुवेधस्य सिद्धान्तितत्वात् व्यङ्ग्येऽपि स्फोटे शब्दानुवेधान्न दोष इत्याशयः। यथोक्तम्—

> "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
> अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥"
>
> (वाक्यपदीयम्, १-१२४)

इति। एवं सति लाघवात् पर्यायशब्देष्वेव शक्तिग्रहोऽभ्युपगम्यतामित्याह—**एवं हीति**। स्फोटवादिनस्तु गौरवमित्याह—**तव त्विति**। नानापक्षे दोषमाह—**नान्त्य इति**। **पदार्थानाम्**; स्फोटरूपाणाम्। **क्लृप्तवर्णेष्वेवेति**; वर्णबहुत्व-स्योभयसंमततया तत्र शक्तिकल्पनमेव न्याय्यम्; न तु स्फोटबहुत्वकल्पनम्;

प्रत्येकं स्फोटप्रतीतौ तावतैवार्थबोधापत्तेः। नान्त्यः, 'तद्धेतोः' इति न्यायेनार्थबोधस्यापि तत एवोपपत्तौ तत्कल्पनावैयर्थ्यापत्तिरिति निरस्तमिति कैयटादयः।

४१. अपरे तु—एक एव वर्णः, अनन्तवर्णकल्पने मानाभावात् तत्तद्वर्णोत्पादकत्वादिनाभिमतविजातीयवायुसंयोगविशेषाभिव्यक्ताखण्डपदार्थरूपैकवर्णस्यैव तत्तद्वर्णजनकतावच्छेदकतया व्यञ्जकतावच्छेदकतया वा परमतसिद्धस्य वायुसंयोगनिष्ठस्य वैजात्यस्य परंपरया वर्णवृत्तित्वमादाय

---

"धर्मिकल्पनातो वरं धर्मकल्पना" (लौकिकन्यायसंग्रहः) इति न्यायादिति भावः। एवंच वर्णातिरिक्तः स्फोटो नाङ्गीकार्य इति विचारेऽस्मिन् फलितोऽर्थः। विचारान्तरमनुवदति—**अपि चेति**[1]। **तावतैव**; प्रथमवर्णेनैवार्थबोधसंभवे द्वितीयादिवर्णोच्चारणनैरर्थक्यमिति भावः। **तद्धेतोरिति**; "तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन" (लौकिकन्यायसंग्रहः) इति न्यायशरीरम्। **तत एव**; वर्णैरेव। **तत्कल्पना**; अतिरिक्तस्फोटकल्पना। **इति कैयटादय इति**; आदिपदेन तदनुसारिणः कौस्तुभकारादयो गृह्यन्ते।

४१. एवं वर्णबहुत्वमभ्युपगम्याखण्डस्फोट उपपादितः, अधुना वर्णैकत्वमभ्युपगम्य तमाह—**अपरे त्विति**। **एक एवेति**, न तु नानेति भावः। तत्र हेतुमाह—**अनन्तेति**। ननु यद्येक एव वर्णः, तदा कखगादिभेदो न स्यादित्यत्राह—**तत्तदित्यादि**। **तत्तद्वर्णेति**; कादिवर्णेत्यर्थः। **विजातीयवायुसंयोगविशेषेति**; विवारसंवारादिप्रयत्नादिसहितवायुसंयोगविशेषेत्यर्थः। उत्पत्तिपक्षे—**तत्तद्वर्णजनकतावच्छेदकतयेति**। अभिव्यक्तिपक्षे—**व्यञ्जकतावच्छेदकतयेति**। **परमतसिद्धस्य**; वर्णबहुत्ववादिनां मते सिद्धस्य। **परंपरया**; स्वाश्रयव्यङ्ग्यत्वसंबन्धेन।

[1] *cf. Anuvyākhyānanyāyasudhā*. Fol. 88*a* Madhva vilas Book Depot edition, Kumbakonam.

अन्येषां मते तारत्वादिना प्रत्ययवदस्मन्मते कत्वादिनापि प्रतीतिसंभवाच्च। अत एव भामत्याम्—'तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते' इति देवताधिकरणेऽभिहितम् (भामती, १-३-२८)। 'सोऽयं गकारः' 'तदेवेदं पदम्' इत्यादिप्रत्यभिज्ञापि गत्वाधिकरणवायुसंयोगाभिव्यक्तं दर्पणमुखवद्व्यञ्जकधर्मरूषिततया प्रतीयमानमेकं वर्णमादायैव बोध्या। एवम् 'एकं पदम्' इत्याद्यपि, वस्तुतः पदार्थस्यैकत्वात्। न च तस्य नित्यत्वेन 'ककार उत्पन्नः' इति प्रत्ययो न स्यादिति वाच्यम्, व्यञ्जकनिष्ठोत्पत्तेः परंपरया तत्र सत्त्वादक्षतेः। साक्षात्संबन्धांशे तु प्राग्वदेव भ्रमत्वं कल्प्यते। एतेन तदग्रहे तन्निष्ठ-

---

**अन्येषाम्**; वर्णबहुत्ववादिनाम्। **तारत्वादिनेति**; 'तारो गकारः, मन्द्रो गकारः' इति प्रतीतिवदिति भावः। तारत्वादीनां परंपरासंबन्धेन वर्णेषु प्रतीतौ वृद्धसंमतिमाह—**अत एवेति**। वर्णैकत्वे प्रत्यभिज्ञानमपि प्रमाणयति—**सोऽयं गकार इति**। **दर्पणमुखवदिति**; यथा मुखस्यैकस्य मणिकृपाणदर्पणाद्युपधानवशान्नानापरिमाणसंस्थानभेदविभ्रमः, एवमेकस्यापि वर्णस्य व्यञ्जकध्वनिनिबन्धनोऽयं नानाधर्मसंसर्गविभ्रमः; न तु भाविको नानाधर्मसंसर्ग इति भावः। **आदायैव बोध्येति**; वर्णानामनेकत्वे सा प्रत्यभिज्ञा न संगच्छेतेति भावः। **शङ्कते—न चेति**। **तस्य**; वर्णस्य। **व्यञ्जकनिष्ठेति**; वायुसंयोगरूपव्यञ्जकनिष्ठेत्यर्थः। **परंपरया**; स्वाश्रयव्यङ्ग्यत्वसंबन्धेन। यदि साक्षात्संबन्धेनाश्रयत्वरूपेणोत्पन्नत्वप्रतीतिः सा भ्रम इत्याह—**साक्षादिति**। **एतेन**; परंपरासंबन्धेन तदाश्रयत्वप्रतीत्यङ्गीकारेण। अस्य निरस्तमित्यनेन संबन्धः। **तदग्रहेति**; वायुसंयोगस्य प्रत्यक्षप्रमाणाविषयत्व इत्यर्थः। **तन्निष्ठेति**; वायुसंयोगनिष्ठेत्यर्थः। येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिस्तदभावश्च

जात्याद्यग्रहः; किंच 'येन यस्य धर्मो गृह्यते तेन तदपि' इति नियमात् वायुसंयोगानामपि श्रोत्रेण ग्रहणापत्तिरिति निरस्तम्। साक्षात्संबन्धेन तदग्रहेऽपि परंपरया तद्ग्रहात्। एतेन 'किंच' इत्यादिकमप्यपास्तम्; रसनादे रसादिमात्रग्राहकतायाः परैरभ्युपगमेन व्यभिचाराच्च। न चैवं विलक्षणवायुसंयोग एव वाचकोऽस्त्विति वाच्यम्, प्रत्यक्षोपलभ्यमानककारादेर्वाचकत्वस्यानुभवसिद्धत्वात्; 'शृणोमि' इत्याद्यनुभवेन स्फोटस्यावश्यकत्वाच्च। वायुसंयोगाश्च केचन कत्वेन, केचन गत्वेन, केचन हत्वेन, इत्यनेकैः प्रकारैरभिव्यञ्जकाः। तत्तद्वायुसंयोगाभिव्यक्तानां परंपरया तत्त-

---

गृह्यत इति नियमः। वायुसंयोगस्याश्रावणत्वे तद्वैजात्यस्याप्यग्रह इति कत्वादिग्रहोपपादनमसंगतमिति विवक्षितोऽर्थः। दोषान्तरमप्याह—**किंचेति**। येनेन्द्रियेण यस्य द्रव्यादेर्धर्मो गृह्यते तेनेन्द्रियेण तदपि द्रव्याद्यपि गृह्यत इति नियमात् वायुसंयोगधर्मस्य वैजात्यस्य श्रावणत्वे वायुसंयोगस्यापि श्रावणत्वं स्यादिति भावः। निरासे हेतुमाह—**साक्षादिति**। परंपरासंबन्धमादाय गौणव्यवहारे नायं नियम इति भावः। किंचेत्यादिनोक्तं दोषं निरस्यति—**एतेनेति**। **रसनादेरिति**; आदिपदेन घ्राणादिग्रहः। तर्हि लघवात् वायुसंयोग एव वाचकोऽस्तु; किमन्तर्गडुना वर्णेनेत्यत्राह—**न चैवमिति**। **प्रत्यक्षेत्यादि**; अनुमितिविषये हि लाघवगौरवचर्चा, न तु प्रत्यक्षप्रतिपन्ने। ककारादिर्वर्णश्च प्रत्यक्षसिद्ध इति तत्र लाघवगौरवचिन्ता न पराक्रमते। अन्यथा लाघवात् विज्ञानमेकमेव पदार्थः, न तु प्रत्यक्षदृश्या घटपटादय इति जितं योगाचारमतेनेति भावः। हेत्वन्तरं चाह—**शृणोमीति**। वायुसंयोगस्याश्रावणत्वादनुभवविरोध इति भावः। वायुसंयोगाभिव्यञ्जकत्वमेवोपपादयति—**तत्तदित्यादिना**। अभिव्यक्तेः क्षणिकत्वात् कथं स्फोटस्य वाचकस्य ग्रह इतीमां शङ्कामनूदिताम-

द्वैजात्याक्रान्तानां स्फोटानामभिव्यक्तेः क्षणिकत्वेऽपि पूर्वपूर्वसंस्कारसहकृत-श्रोत्रेणाव्यवहितोत्तरत्वसंबन्धेन घत्वेनाभिव्यक्तस्फोटवत्त्वं टत्वेनाभिव्यक्त-स्फोटे गृह्यते। बोधकारणतावच्छेदकं चाव्यवहितोत्तरत्वसंबन्धेन घत्वेनाभि-व्यक्तस्फोटविशिष्टत्वेनाभिव्यक्तस्फोटत्वादि परेषामिवास्माकमपि। अव्य-वहितोत्तरत्वं च [1]उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषय-त्वम्। तदर्थज्ञापकत्वज्ञानमप्यव्यवहितोत्तरत्वसंबन्धेन पूर्वस्फोटविशिष्टोत्तर-स्फोटविशिष्टचरमवैजात्यविशिष्टस्फोटश्रवण एव। अत एव वर्णवैकल्यादिना-श्रवणे न बोधः। यत्र तु तद्वैजात्यविशिष्टस्फोटेषु व्युत्क्रमेणाभिव्यक्तेष्वपि तदर्थज्ञापकत्वग्रहः, तत्र भवत्येव बोधः परेषामिवास्माकमपि; यथा हाला-हलहालहलयोः, मरतकमरकतयोः, कुशकुसयोर्वा। एतेन वायुसंयोगानां प्रत्येकमभिव्यञ्जकत्वं समुदितानां वेत्यादिविकल्पगणग्रासादयं पक्षोऽयुक्त इत्यपास्तम्।

---

पाकरोति—पूर्वपूर्वेति। अभिव्यक्तेः क्षणिकत्वेऽपि परंपरासंबन्धेन स्फोटस्य ग्रह उपपद्यत इति भावः। **परेषामिव**; अनेकवर्णवादिनामिव। अव्यवहितोत्तर-त्वं निर्वक्ति—उत्पत्तीत्यादि। **अत एव**; तादृशवैजात्यविशिष्टस्फोटश्रवणस्यार्थ-ज्ञापकत्वादेव। **वर्णवैकल्यादिनेति**; वर्णानां वैकल्यमस्पष्टोच्चरितत्वम्। अश्रवणे इति पदच्छेदः। **न बोध इति**; स्फोटश्रवणरूपकारणाभावादिति भावः। कर्णवैकल्यादिनेति वा पाठः। तदा कर्णस्य श्रोत्रेन्द्रियस्य वैकल्यमपाटवम्। **व्युत्क्रमेण**; क्रमव्यत्यासेन, यथा मरकतमरतकयोः। **परेषामिति**; यथा परेषां तथास्माकमपीति भावः। **एतेन**; पूर्वपूर्वसंस्कारसहकृतेत्यादिना पूर्वोक्तरीतेरङ्गी-कारेण। **वायुसंयोगानामिति**; क्षणिकानामिति शेषः।

[1] उक्त्यनवच्छिन्न. G.

४२. यद्यपि गकारादयस्तावदेकैका नित्या एव, प्रहरात्पूर्वमनुभूयमानादधुनानुभूयमानस्य 'सोऽयम्' इति प्रत्यभिज्ञारूपाभेदप्रत्ययात्। न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयः, व्यक्त्यतिरिक्तगत्वानङ्गीकारात्। ननु व्यक्त्यभिन्नत्वे मतुपोऽनापत्तिः, अभेदे तदनङ्गीकारात्;

---

४२. व्यक्तिस्फोटप्रसङ्गेन तत्र मीमांसकमतमाह—**यद्यपीति**। अस्य 'इति मीमांसकानुयायिनः' इत्यग्रिमेणान्वयः। **गकारादय इति**; आदिपदेन ककारादीनां ग्रहणम्। ककाररूपवर्णः सर्वोऽप्येक एव, नित्यश्च। एवं गकारवकारादय इति भावः। वर्णानामेकत्वं नित्यत्वं च प्रतिज्ञाय तत्र हेतुमाह—**प्रहरादिति**। मुहूर्तात्पूर्वमित्यर्थः। 'सोऽयं गकारः' इति प्रत्यभिज्ञा मुहूर्तात्पूर्वमनुभूतस्येदानीमनुभूयमानस्य चैक्यमवगाहते। तच्चैकत्वं नित्यत्वं चान्तरा न संगच्छत इति भावः। प्रत्यभिज्ञाया अन्यथोपपादयितुं शक्यत्वात् न सैकत्वे नित्यत्वे च साधिकेत्याशङ्क्य निराकरोति—**न चेति**। **तद्विषयः**; प्रत्यभिज्ञाविषयः। गकाराणामनेकत्वेऽपि तत्र गत्वरूपजात्यङ्गीकारात् गत्वावच्छिन्नप्रतियोगिताकभेदो गकारेषु परस्परं नास्तीति 'सोऽयम्' इति प्रत्यभिज्ञासंभवान्न सा नित्यत्वैकत्वयोः साधिकेति भावः। समाधत्ते—**व्यक्त्यतिरिक्तेति**। गकारापेक्षयातिरिक्ता गत्वाख्या जातिर्नाङ्गीक्रियते; ततश्च तदवच्छेदमादाय प्रत्यभिज्ञोपपादनं न संभवतीति भावः। अयं भावः—देशकालादिभेदेन प्रतीयमानस्यापि गकारस्य 'स एवायं गकारः' इत्येकबुद्धिग्राह्यत्वेनाकाशवदेकत्वे सिद्धे नैकव्यक्तिविश्रान्तं गत्वाख्यं सामान्यं भवतीति। गत्वजात्यनङ्गीकारे दोषमाशङ्कते—**नन्विति**। **व्यक्त्यभिन्नत्व इति**; गत्वादेरित्यर्थः। मतुपोऽनापत्तिमुपपादयति—**अभेद इति**। **तदनङ्गीकारात्**; मतुपोऽनङ्गीकारात्। 'तदस्यास्त्यस्मिन्निति मतुप्' (पा. ५-२-९४) इति व्यतिरेकबोधकषष्ठीश्रवणादव्यतिरेके मतुप् न स्यादिति भावः। तदेव

न हि भवति 'घटवान् घटः' इतीति चेत्——न ; गकारादिशब्दैर्विना लक्षणां तद्व्यतिरेकेण गत्वादेर्भानाभाव इति हि तदर्थः । गत्वशब्देनाभिधीयमानं त्वतिरिक्तमेवेति न दोषः । अस्तु वा अतिरिक्तम् ; तथापि न क्षतिः, भिन्नेषु घटादिषु घटत्वावच्छिन्नप्रतियोगिताकभेदाभावसत्त्वात् 'सोऽयम्' इति प्रतीत्यापत्त्या व्यक्त्यभेदस्यैव तत्र विषयत्वावश्यकत्वात् ; प्रत्यभिज्ञाया व्यक्तिविषयत्वे बाधकाभावाच्च । न च 'गकार उत्पन्नः' इति प्रतीतिरेव बाधिका, तस्या [1]व्यञ्जकध्वनिनिष्ठोत्पत्त्यादेः परंपरासंबन्धेन वर्णनिष्ठत्वेनाप्युपपत्तावतिरिक्तत्वसाधकत्वाभावात् । परंपरया वर्णनिष्ठत्वाभ्युपगमाच्च न भ्रमत्वम् । साक्षात्संबन्धांशे भ्रम इत्यवशिष्यते । तदपि 'सोऽयम्' इत्यत्र व्यक्त्यभेदांशे भ्रमत्ववत्तुल्यम् । परंतु ममानन्तवर्णतत्प्रागभावध्वंसकल्पनापत्तिर्नेति लाघवमतिरिच्यते । तव तु तत्स्यादिति महदनिष्टम् । एतेनोत्पत्तिविनाशप्रत्यय-

---

दृष्टान्तमुखेन विशदयति——न हीति । समाधत्ते——नेति । तद्व्यतिरेकेण ; गकारादिव्यक्तिव्यतिरेकेण । एतावता गत्वस्य व्यक्त्यपेक्षया पृथग्भानाभाव उपपादितः । अथ गत्वस्य व्यक्तेः पृथक्त्वमभ्युपगम्याप्याह——अस्तु वेति । **अतिरिक्तम्** ; गत्वमिति शेषः । क्षत्यभावमेवोपपादयति——भिन्नेष्वित्यादिना । तत्र ; प्रत्यभिज्ञायाम् । व्यञ्जकनिष्ठोत्पत्त्यादेर्वर्णनिष्ठत्वेन भाने भ्रमत्वमाशङ्क्य परिहरति——परंपरयेति । तुल्यमिति ; गकारव्यक्तिभेदवादिनः 'सोऽयं गकारः' इति प्रतीतिर्भ्रमत्वेनाङ्गीकरणीया । तद्वन्ममाप्युत्पत्त्यादेः साक्षात्संबन्धेन वर्णे भाने भ्रमत्वमिष्टमेवेति भावः । तथापि स्वमते लाघवमुपपादयति——परं त्विति । मम ; वर्णैकत्ववादिनो मम । तव तु ; वर्णबहुत्ववादिनस्तव । एतेन ; पूर्वोक्तलाघवात् ।

[1] व्यञ्जक omit· G.

योर्भ्रमत्वकल्पनापेक्षया प्रत्यभिज्ञामात्रस्य भ्रमत्वकल्पने लाघवमित्य[1]-पास्तम्। किंच प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्न वर्णेषु ग्रहणमानुभविकम्। अत एव 'वर्णमुच्चारयति' इति प्रत्ययो व्यवहारश्च; न तु 'उत्पादयति' इति प्रत्ययो व्यवहारश्च। उच्चरितत्वं च ताल्वोष्ठपुटसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम्। तथाच प्रागनुभूतेनेदानींतनानुभूतस्याभेदसिद्धौ, "तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति" (श्लोकवार्तिकम्, शब्दनित्यत्वा. श्लो. ३६६) इति न्यायेन नित्यतैव। नन्वेवं 'स्त्रीप्रभवोऽयम्' 'शुकप्रभवोऽयम्' इति प्रतीतिस्तच्छ्रवणात् स्त्रीशुकाद्यनुमानं च न स्यात्; किंच 'सेयं गुर्जरी' 'सेयं दीपकलिका' इत्यादिप्रतीतेस्तेषामपि नित्यता स्यादिति चेत्—न; स्त्रीशुकादिजन्यतावच्छेदकस्य वर्णव्यञ्जकध्वनिष्वनुभूयमानस्य वैजात्यस्य परंपरया वर्णेषु सत्त्वेनाक्षतेः। अत एव सानुनासिकत्वनिरनुनासिकत्वोदात्तत्वानुदात्तत्वतारत्वमन्द्रत्वादिरूपविरुद्धधर्माध्यासाद्भेद इति निरस्तम्;

---

**वर्णेषु**; नित्येषु वर्णेषु। **आनुभविकम्**; अनुभवसंवादि। 'उच्चारयति' इति प्रत्ययादप्यनित्यत्वं स्यादित्याशङ्कायां तन्निर्वक्ति—**उच्चरितत्त्वं चेति**। वर्णैकत्वे शङ्कते—**नन्वेवमिति**। **प्रतीतिरिति**; वर्णैकत्वे इयं प्रतीतिर्न स्यादिति भावः। प्रत्यभिज्ञाबलाद्वर्णैकत्वसाधने व्यभिचारमाशङ्कते—**किंचेति**। समाधत्ते—**नेति**। **परंपरया**; स्वाश्रयव्यङ्ग्यत्वसंबन्धेन। **निरस्तमिति**; तेषां

[1] ०मिति परास्तम्, G.

'योऽयं रामेणोक्तः सोऽयं कृष्णेनोच्यते' 'योऽयं तारो मया श्रुतः स एवेदानीं मन्द्रः' इति प्रतीतेस्तारत्वादेर्विरोधाभावाच्च ; 'यदेव पद्यं देवदत्तापेक्षया विष्णुनोच्चैः पठितं तदेवानेन तदपेक्षया मन्द्रं पठितम्, न त्विदं पद्यान्तरम्' इति सकलानुभवविरोधाच्च ; तत्र पद्यान्तरत्वापत्तेश्च ; तत्राव्यवहितोत्तरत्वादिरूपक्रमस्यापि तद्भेदेन च कालभेदेन च भिन्नत्वाच्च । गुर्जरीदीपादिस्थले च मानान्तरेण नाशादिसिद्धेः 'सेयम्' इत्यस्य भ्रमत्वम् । अन्यथा तत्रापीष्ट एव नाशाद्यभावः । न च नित्यत्वे वायुताल्वोष्ठसंयोगादेः ककारादिप्रत्यक्षत्वं कार्यतावच्छेदकमिति[1] वाच्यम् ; मम तु गत्वमेवेति गौरवमिति वाच्यम् । अनन्तप्रागभावध्वंसादिकल्पनापेक्षया लघुत्वात् ;

---

व्यञ्जकध्वनिनिष्ठतया वर्णधर्मत्वाभावादिति भावः । यदाह शास्त्रदीपिकाकारः "न त्वेते परमार्थतो वर्णधर्माः, ध्वनिधर्मास्त्वेते वर्णे केवलमाभासन्ते" (शास्त्रदीपिका, १-१-९) इति । वर्णैकत्वे हेत्वन्तरमाह—**योऽयमिति** । **विरोधाभावाच्चेति** ; तारत्वप्रतीतिः पूर्वम् ; इदानीं तु मन्द्र इति कालभेदान्न विरोधः । यथा 'सोऽयं देवदत्तः' इत्यत्र तद्देशवर्तित्वमेतद्देशवर्तित्वमेकस्य देवदत्तस्य युगपद्विरुद्धमपि कालभेदेन संगच्छते तद्वदिति भावः । एतेन 'सोऽयं देवदत्तः' इत्यत्र लक्षणाकल्पनया निरर्थकायासिनः प्रत्युक्ता वेदितव्याः । **तद्भेदेन** ; व्यञ्जकध्वनिभेदेन । **मानान्तरेण** ; अनुमानादिना । वर्णनित्यत्वे गौरवमाशङ्कते—**न चेति** । **ककारादिप्रत्यक्षत्वम्** ; ककारादिविषयकप्रत्यक्षत्वं कार्यतावच्छेदकमित्यर्थः । **मम तु** ; वर्णानित्यत्ववादिनो मम नैयायिकस्य तु । **गौरवमिति** ; मीमांसकस्य तव मत इति भावः । प्रकारान्तरेण नैयायिकमते गौरवं स्वमते लाघवं चाह—**अनन्तेत्यादिना** । वस्तुतः 'न हि दृष्टेऽनुपपन्नं नाम' इति

[1] इति omit. G.

प्रत्यक्षत्वावच्छिन्नविषयतया गत्वस्यैव[1] कार्यतावच्छेदकत्वाच्च। नन्वेवं घटाद्यपि नित्यमेव स्यात्; कपालसंयोगादिकं व्यञ्जकं भविष्यतीति चेत्—न; उत्पत्तिप्रतीतेर्विना बाधकं साक्षात्संबन्धांशे भ्रमत्वायोगात्; वर्णेषु तदग्रहविपरीतग्रहयोः सत्त्वेन तदयोगात्; सत्कार्यवाद इष्टापत्तेश्च। न च ककारादेर्व्यञ्जकं विनाननुभवेऽन्धकारस्थघटवत् संदेहापत्तिरिति वाच्यम्, दोषाद्यभावादुत्पन्नत्वादिसंदेहस्य तवापि दुर्वारत्वाच्च। न च वर्णस्थले ध्वनिसत्त्वे मानाभावः, शङ्खाद्यभावेन तदुत्पत्त्यसंभवश्चेति वाच्यम्।

---

न्यायात् प्रत्यक्षविषये लाघवगौरवचर्चा न साध्वी। किं त्वनुमितिविषय एव सा शोभत इति ज्ञेयम्। उत्पत्त्यादेर्व्यञ्जकनिष्ठत्वात् वर्णा नित्या इति पक्षेऽतिप्रसङ्गमाशङ्कते—**नन्वेवमिति**। घटादेरनित्यत्वं प्रातीतिकं तुल्यन्यायादुपपादयति—**कपालेति**। समाधत्ते—**नेति**। विना बाधकमित्यन्वयः। **तदग्रहेति**; उत्पत्त्यग्रहेत्यर्थः। **विपरीतग्रहेति**; नित्यत्वग्रहेत्यर्थः। **तदयोगात्**; अनित्यत्वायोगात्। **इष्टापत्तेरिति**; घटादीनां नित्यत्वमिष्टमेवेत्यर्थः। "नासतो विद्यते भावः" (भगवद्गीता २·१६) इति न्यायेन घटादे रूपान्तरेण नित्यत्वमिष्टमेवेत्यर्थः। शङ्कते—**न चेति**। **व्यञ्जकं विना**; ध्वनिं विना। **अन्धकारस्थेति**; यथा आलोकसंयोगं व्यञ्जकं विनान्धकारस्थघटस्य संदेहो भवति, एवं व्यञ्जकं विना नित्यस्यापि वर्णस्य संदेहः स्यादिति भावः। समाधत्ते—**दोषाद्यभावादिति**; संदेहाङ्गीकारे दोषाभावादित्यर्थः। **मानाभाव इति**; वर्ण एव गृह्यते न ध्वनिरिति तत्र प्रत्यक्षादिकं मानं नास्तीति भावः। ध्वन्यसंभवमप्याह—**शङ्खाद्यभावेनेति**। शङ्खादिकं हि ध्वन्युत्पादकतया लोकेऽवगतम्। शङ्खादेरभावे कारणाभावात् कार्याभाव इति न्यायेन ध्वनेः संभवोऽपि नास्ती-

[1] गत्वावच्छिन्नस्यैव. G.

वर्णग्रहणे ध्वनिग्रहणस्यानुभवसिद्धत्वात्। वर्णोच्चारणस्थले तत्तत्स्थाने जिह्वाया ईषदन्तरपाते वर्णानुपलब्धेर्ध्वन्युपलब्धेश्च दर्शनेन[1] जिह्वाभिघात-जवायुकण्ठसंयोगादेस्तज्जनकत्वकल्पनागौरवापत्तेश्च। न चाकारस्याप्येकत्वा-पत्तौ 'घटेन तरति घटिकः' इत्यादौ "नौद्व्यचः" (पा ४-४-७) इति ठन्न स्यात्, द्व्यच्कत्वाभावादिति वाच्यम्; आवृत्तिकृतद्व्यच्त्वव्यपदेशेन सिद्धेः।

——

त्यर्थः। समाधत्ते—**वर्णग्रहण इति**। **अनुभवसिद्धत्वादिति**; तथाच नापलापार्ह इति भावः। एवमपि वर्ण एव गृह्यते न ध्वनिरिति यदि दृढमुष्टिकया विवादः क्रियते, तदा वर्णाग्रहणस्थले ध्वनिग्रहणमुपपाद्य ध्वनेरावश्यकतां साधयति—**वर्णोच्चारणेति**। **तत्तत्स्थाने**; कण्ठादिस्थाने। **वर्णानुपलब्धेरिति**; जिह्वया कण्ठादिस्थानस्य नीरन्ध्रस्पर्शं एव वर्ण उपलभ्यते, न त्वन्यथेति भावः। **ध्वन्युपलब्धेश्चेति**; ईषदन्तरपाते वर्णोपलब्धिं विना ध्वन्युपलब्धे-र्ध्वनिरवश्यमभ्युपेय इति भावः। शङ्खाद्यभावात् कारणाभावेन न ध्वन्युप-लब्धिरिति यदुक्तं तत्प्रतिवक्ति—**जिह्वाभिघातेति**। **तज्जनकत्वकल्पनात्**; ध्वन्युत्पादकत्वकल्पनात्। एवं च कारणसत्त्वात् कार्योत्पत्तिरुपपन्नेति भावः। यदि जिह्वाभिघातजवायुकण्ठसंयोगरूपकारणसत्त्वेऽपि न ध्वनिरुत्पद्यत इत्यु-च्यते तदा वर्णोत्पत्तिर्ध्वन्युत्पत्तौ प्रतिबन्धिकेति प्रतिबध्यप्रतिबन्धकभावकल्पनं स्यात्; तच्च गौरवपराहतमिति भावः। वर्णानामेकत्वे दोषमापादयति—**न चेति**। घटेन तरतीति विग्रहवाक्यप्रदर्शनम्। समाधत्ते—**आवृत्तीति**। यथोक्तं वार्तिककृता "एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात्" (महाभाष्यम्, प्रत्याहाराह्निकम्) इति। "तद्यथा—'सप्तदश सामिधेन्यो भवन्ति' इति। 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इत्यावृत्तितः सप्तदशत्वं भवति। एवमिहाप्यावृत्तितोऽनेकाच्कत्वं भविष्यति" इति तद्भाष्यम्। ननु 'बाहुना तरति बाहुकः' इत्यादौ मुख्ये

[1] **दर्शनेन**, omit G.

अश्वादिप्रतिषेधेन तद्विषये गौणस्यापि ग्रहणज्ञापनात्। अत एव 'किरिणा' इत्यादौ "सावेकाचः" (पा॰ ६-१-१६८) इति विभक्त्युदात्तत्वं न, आवृत्तिकृतद्व्यज्व्यपदेशेनैकाज्व्यपदेशस्य निवर्तितत्त्वात्। न हि त्रिपुत्रो 'द्विपुत्रः' इति व्यपदेशं लभत इति मीमांसकानुयायिनः। तथाप्यर्धजरतीयस्यान्याय्यत्वात् लाघवाच्च कत्वादिकं वायुसंयोगनिष्ठमङ्गीकृत्य मा सन्त्वनन्ता वर्णाः,

---

विषये वचनस्य कृतार्थत्वात् गौणे विषये न विधिः प्रवर्ततेत्याशङ्कयाह— **अश्वादीति**। "गो द्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्" (पा. २-१-३९) इत्यत्र द्व्यच्त्वात् प्राप्तो यत् अश्वशब्दे पर्युदस्यते। यदि गौणस्थले सर्वत्र विधिर्न प्रवर्तेत, तदा अश्व इत्यत्र द्व्यच्कत्वस्य गौणत्वान्न यतः प्रसक्तिरिति पर्युदासो व्यर्थः स्यात्। अतो ज्ञायते द्व्यच्त्वव्यवहारविषये गौणस्यापि व्यवहारस्य ग्रहणमिति। तस्मान्न घटिकादौ दोष इति भावः। **अत एव**; तद्विषये गौणस्यापि ग्रहणादेव। **सावेकाच** इति; "सावेकाचस्तृतीयादिर्विभक्तिः" (पा. ६-१-१६८) इति सूत्रम्। साविति सप्तमीबहुवचनम्। तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्तेति तदर्थः। "वाचा विरूप" (तैत्तिरीयसंहिता, २-६-११-१) इत्युदाहरणम्। किरिणेत्यादावावृत्तिकृतद्व्यच्त्वात् नैकाच्त्वमित्यस्याप्रवृत्तिः सिध्यतीति भावः। आवृत्तिकृतद्व्यच्त्वेऽपि स्वत एकाच्त्वमादाय स्यादित्याशङ्कायामाह—**न हीति**। इति **मीमांसकानुयायिन** इत्येतत्पर्यन्तं तन्मतानुवादः। तन्निराचष्टे—**तथापीति**। **अर्धजरतीयेति**; जरत्या अर्धमिव अर्धजरतीयमितीवार्थे "समासाच्च तद्विषयात्" (पा. ५-३-१०६) इति छः। अयं भावः—यदि लाघवमवलम्ब्य सर्वोऽपि ककार एक एव, एवं गकारोऽपीत्युच्यते, तदा लाघवात् सर्वोऽपि वर्ण एक एवास्तु; कृतं ककारगकारादीनां पृथक् पृथक् समाश्रयेण। एवं तद्व्यञ्जका ध्वनयोऽपि पृथक् पृथक् मा भूवन्। वर्णध्वनिभेदो वायुसंयोगोपाधिकोऽस्तु। तथाच जितं स्फोट-

मा सन्तु वा अनन्ता ध्वनयः, एक एव पदार्थः श्रोत्रग्राह्योऽङ्गीक्रियताम्। इयांस्तु विशेषः—तस्यैव विजातीयवायुसंयोगैः कत्वादिनाभिव्यञ्जनम्, विजातीयैश्च तदनाक्रान्तध्वनिरूपेणेत्येव युक्तमिति सिद्धान्तः। न च ककारहकारयोरेकत्वापत्तिर्भिन्नत्वप्रतीत्यनापत्तिश्चेति वाच्यम्, व्यञ्जकगतवैजात्येन भेदात्; अद्वैतसिद्धान्ते विषयसंबन्धजन्यवृत्तिवैचित्र्येण व्यङ्ग्ये स्वरूपसुखे वैचित्र्यवत्। विशेष्यांशमादायाभेद इष्ट एव। तत्प्रतीतिस्तु नापाद्या, उपाध्यनालिङ्गितवर्णप्रतीत्यभावात्। एतेन—'योऽयं हकारः स एवेदानीं गकारः' इति प्रतीतिः स्यात्; 'हकारोऽयं न गकारः' इति प्रतीतिश्च न स्यादित्यपास्तम्।

---

वादेनेति। **पदार्थः**; स्फोटरूपः। **श्रोत्रग्राह्य इति**; स्फोटे प्रत्यक्षप्रमाणमुक्तं भवति। वायुसंयोगस्याभिव्यञ्जकत्वाविशेषेऽपि वर्णध्वनिव्यपदेशे हेतुमाह—**इयांस्तु विशेष इति**; वक्ष्यमाण इत्यर्थः। **तस्यैव**; स्फोटाख्यपदार्थस्यैव। **तदनाक्रान्तेति**; कत्वाद्यनाक्रान्तेत्यर्थः। यदा व्यङ्ग्यः शब्दः कत्वाद्याक्रान्तो भवति, तदा वर्ण इति व्यवह्रियते; यदा कत्वाद्यनाक्रान्तो भवति, तदा ध्वनिरिति व्यवह्रियत इति सर्वानुभवसंवादी भेद उक्तो भवति। स्फोटाङ्गीकारे दोषमाशङ्कते—**न चेति**। **एकत्वापत्तिरिति**; उभयोरप्येकस्फोटरूपत्वादिति भावः। **व्यञ्जकेति**; वायुसंयोगेत्यर्थः। तत्र तन्त्रान्तरसिद्धं निदर्शनमाह—**अद्वैतेति**। वृत्तिवैचित्र्यात् स्वरूपसुखे यथा वैचित्र्यं तद्वदिति भावः। **तत्प्रतीतिः**; स्फोटप्रतीतिः। **उपाधीति**; कत्वादीत्यर्थः। एतेन; उपाध्यनालिङ्गितप्रतीत्यभावेन। **प्रतीतिः स्यादिति**; उभयत्रापि स्फोटस्यैव भानादित्यभिमानः। **प्रतीतिश्च न स्यादिति**; अत्रापि स एव हेतुः।

४३. न चैवं विलक्षणवायुसंयोगा एव श्रोत्रग्राह्याः सन्तु; किमेकस्याप्यतिरिक्तस्य कल्पनयेति वाच्यम्। 'एको गकारः, एकं पदम्;' इत्यादिप्रतीत्यनुरोधेन तस्यावश्यकत्वात्। अत एव वाचस्पतिमिश्रास्तत्त्वबिन्दौ—"वस्तुतः ककारादतिरिच्यमानमूर्तेर्गकारस्याभावात्" इति स्फोटवादिमतमुपन्यास्थन्[1]। अत्रापि पक्षे पदवाक्यग्रहणप्रक्रिया प्राग्वदेव। शक्तिग्रहशाब्दबोधप्रक्रियापि प्राङ् निरूपितरीत्या बोद्धृभेदेन नियतैव। वस्तुतः पदार्थस्यैकत्वादखण्डस्फोट इति व्यवहार इति प्राहुः।

नन्वेवं शास्त्राप्रामाण्यप्रसङ्गः; पदवाक्ययोरखण्डत्वात्; शास्त्रस्य च प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनपरत्वादिति चेन्न। उत्तरमीमांसायामन्नमय-

---

४३. **विलक्षणेति**; विजातीयेत्यर्थः। **एकस्यापीति**; अपिशब्दस्यायमभिप्रायः—बहूनां वायुसंयोगानां श्रोत्रग्राह्यत्वे गौरवात् एक एव स्फोटोऽङ्गीक्रियत इति हि भवदभिमतम्। तथापि वर्णव्यञ्जकतया वायुसंयोगानामावश्यकत्वात् तैरेव सर्वेष्टसिद्धौ अतिरिक्तस्यैकस्यापि स्फोटस्य कल्पनं निरर्थकमिति। **एक इति**; वायुसंयोगानां विषयत्वे तेषां बहुत्वात् एक इति प्रतीतिर्विरुध्येतेति भावः। **तस्य**; स्फोटस्य। अत्राभियुक्तसंमतिमप्याह—**अत एवेति**; स्फोटस्यावश्यकत्वादेवेत्यर्थः। **अभावादिति**; स्फोटस्यैकस्यैव श्रोत्रग्राह्यत्वात् तस्मिन् ककारादयो भेदा औपाधिका इति भावः। **अत्रापि पक्ष इति**; अखण्डस्फोटपक्ष इत्यर्थः। **प्राग्वदेव**; काल्पनिकीति भावः। **एवम्**; अखण्डस्फोटाङ्गीकारे। अप्रामाण्यप्रसङ्गमुपपादयति—**शास्त्रस्य चेति**। समाधत्ते—**नेति**। **उत्तरमीमांसायामिति**; उपनिषदर्थविचार इत्यर्थः। **अन्नमयेति**; आनन्दवल्ल्याम्—अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयानात्मन उपदिश्य तदनन्तरमान्तरं ब्रह्म

[1] Cf. *Tattvabindu*, page 16, Annamalai University edition.

प्राणमयमनोमयविज्ञानमयानन्दमयपञ्चकोशावतरणस्य सर्वाधारब्रह्मबोधकत्ववत् प्रकृतिप्रत्ययादिविचारस्याखण्डस्फोटबोधनोपायत्वेनादोषात्। ननु शास्त्रज्ञानं विनापि 'गामानय' इति वाक्यमात्रव्युत्पन्नस्य पामरादेरपि शाब्दबोधेन तत्र स्फोटज्ञानस्य जायमानत्वात् नैतच्छास्त्रं पञ्चकोशवत् स्फोटज्ञानोपाय इति चेन्न। प्रकारान्तेरण तज्ज्ञानसंभवेऽपि प्रकृतिप्रत्ययव्युत्पादनपूर्वकविजातीयतज्ज्ञानस्य स्वपूर्वप्रयोगद्वारा शरीरशुद्धिफलकस्य तत्फलत्वेनादोषात्। तदुक्तं हरिणा—"तद् द्वारमपवर्गस्य वाङ्मलानां

---

निर्दिष्टम्; तद्वत् अस्मिन् व्याकरणे प्रकृतिप्रत्ययादीनुपदिश्य तद्द्वारा स्फोटस्वरूपमक्षरमुपदिश्यत इति भावः। अत्र केचित् पञ्चकोशपदेन भृगुवल्ल्युपात्ता "अन्नं ब्रह्मेति व्यजानात" (तैत्तिरीयोपनिषत १-३-१) इत्यादिवाक्याभिप्रेताः पञ्च कोशा विवक्षिता इति व्याचक्षते। तत्तु न विचारसहम्। भृगुवल्ल्यामन्नमयादींश्चतुरः कोशानुदाहृत्य पञ्चमस्यानन्दमयकोशस्य ब्रह्मत्वप्रतिपादनेन चतुर्णामेवान्नमयादिविज्ञानमयान्तानां कोशानां ब्रह्मबोधनार्थत्वम्, न पञ्चानामिति पञ्चकोशावतरणस्य सर्वाधारब्रह्मबोधकत्ववदिति प्रकृतग्रन्थो न संगच्छेत। अतः पूर्वोक्तरीत्या आनन्दवल्लीनिर्दिष्टाः कोशा एव ग्राह्याः। अत एव सर्वाधारब्रह्मबोधकत्ववदिति पुच्छपदविवरणरूपः सर्वाधारशब्दः प्रयुक्तः। शास्त्राप्रामाण्यं प्रकारान्तरेण चोदयति—**नन्विति**। **वाक्यमात्रेति**; मात्रपदेन प्रकृतिप्रत्ययपदविभागव्युदासः। समाधत्ते—**नेति**। **तज्ज्ञानसंभवेऽपि**; स्फोटज्ञानसंभवेऽपि। **विजातीयेति**; प्रकृतिप्रत्ययव्युत्पत्तिपूर्वकत्वमेव वैजात्यमभिप्रेतम्। **स्वपूर्वेति**; स्वशब्दः पूर्वोक्तविजातीयज्ञानपरः। **तत्फलत्वेन**; शास्त्रफलत्वेनेत्यर्थः। तत्राभियुक्तवचनसंवादमाह—**तद् द्वारमित्यादि**। तच्छब्दो व्याकरणशास्त्रपरः। **अपवर्गस्य**; मोक्षस्य। **वाङ्मलानाम्**; वाचो यानि मलानि अपभ्रंशादिरूपाणि

चिकिित्सितम्" (वाक्यपदीयम्. १-१४) इति। एवं च विजातीयज्ञान एव शास्त्रस्योपयोग इति न तृणादिवत् व्यभिचारः। लघुनोपायेन सकल-शब्दप्रतिपत्तौ च शास्त्रस्योपयोगो बोध्यः। न च प्रकृतिप्रत्ययविभागस्य काल्पनिकत्वेन शशविषाणप्रायत्वम्, पञ्चकोशादिवदस्यापि सदसद्विलक्षण-त्वात्। एवं रेखागवयन्यायेनापि शास्त्रमुपाय इत्याहुः।

---

तेषाम्। **चिकिित्सितम्**; चिकित्सेत्यर्थः। हेतुहेतुमतोरभेदोपचारात् 'आयुर्घृतम्' इतिवत् निर्देशः। शारीराणां व्याधिरूपमलानामायुर्वेद इवापभ्रंशरूपाणां वाङ्म-लानां व्याकरणशास्त्रं चिकित्साविधायकमित्यर्थः। व्याकरणज्ञो हि प्रत्यवायहेतूनप-शब्दान् न प्रयुङ्क्ते। पूर्वोक्तसमाधानस्याशयं विवृणोति—**एवं चेति**। **तृणादि-वदिति**; अयं भावः—वह्निं प्रति तृणं कारणमित्युक्ते यत्र तृणं विनापि काष्ठा-दिना वह्निर्जायते तत्र काष्ठजवह्नौ कार्यकारणभावव्यभिचार इत्याशङ्किते, यथा तृणजन्यतावच्छेदकं वैजात्यमङ्गीकृत्य तृणजन्यं वह्निं प्रति तृणस्य कारणत्वमिति न व्यभिचार इति समाधीयते, तथा प्रकृतिप्रत्ययव्युत्पत्तिपूर्वकविजातीयशब्द-ज्ञानं प्रति व्याकरणस्य कारणत्वमित्यङ्गीकारान्न व्यभिचार इति। व्याकरणस्य विजातीयज्ञान उपयोगमुपपादयति—**लघुनेति**। प्रकृतिप्रत्ययादिविभागपरि-कल्पनरूपेणोपायेनेत्यर्थः। प्रकृतिप्रत्ययविभागस्य काल्पनिकत्वे शशविषाणवत् तुच्छत्वं स्यात्। तुच्छस्य चार्थक्रियाकारित्वं नास्ति। न हि शशविषाणेन पाञ्चालिका अन्यद्वा यत्किमपि क्रीडनकं कर्तुं शक्यम। तथा च व्याकरणस्योप-योगप्रदर्शनमसंगतमित्याशङ्क्य समाधत्ते—**न चेति**। तुच्छत्वं निरस्यति—**पञ्च-कोशादिवदिति**। पूर्वोक्तानामन्नमयादीनां कोशानां सदसद्विलक्षणत्वं निर्विशेषा-द्वैतमतसिद्धमिह निदर्श्यते। तथाहि—पञ्चकोशा न सन्तः, बाधितत्वात्। नाप्य-

केचित्तु एकाक्षरनिघण्टुबोधितार्थवाचको वर्ण एव, न तदवयवा इति वर्णस्फोट इत्यस्यार्थः सखण्डपदस्फोट इत्यस्य प्रकृतिप्रत्ययविभागज्ञान-

---

सन्तः; प्रतीतत्वात्। नापि सदसन्तः; तेषामप्रसिद्धेः। अतः, "सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्वं तेषामित्यङ्गीकरणीयम्[1]"। यदाहुः—

"सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधने।
सदसद्भ्यामनिर्वाच्याविद्याविद्यैः सह भ्रमः॥"

(इष्टसिद्धिः, १-९)

इति। वेद्यैः सहेति पाठान्तरम्। तथा—

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥"

(सर्वार्थसिद्धिः, ४-१८)

इति।

तद्वत् प्रकृतिप्रत्ययादिविभागोऽपि सदसद्विलक्षण इति न शशशृङ्गादि-साम्यमिति भावः। **रेखागवयेति**; नागरिकं गवयस्य स्वरूपं बोधयितुं प्रथमतो-रेखारूपं तत् विलिख्य तत्र 'अयमेव गवयः' इति प्रतिबोध्य अनन्तरं तज्ज्ञाप्ये मृगविशेषे यथा गवयत्वबोधनं तथा प्रकृतेऽपीति भावः। यदाह—

"उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥" इति।

(वाक्यपदीयम्, २-२४०)

वर्णस्फोटपदस्फोटयोर्मतभेदमाह—**केचित्त्विति**। **वर्ण एवेति**; पूर्वं वर्णपदं प्रकृतिप्रत्ययपरत्वेन व्याख्यातम्। अधुना तु एकाक्षरपरतया व्याख्यायत

[1] Cf. अद्वैतसिद्धिः p. 621 Nirnayasagara Press Edition, 1917.

पूर्वकं पदं बोधकमित्यर्थः। एवं 'हरेऽव' इत्यादौ प्रत्ययपदज्ञानपूर्वकं बोध इति सखण्डवाक्यस्फोटः। प्रकृतिप्रत्ययकल्पना रेखागवयन्यायेन। तद्बोधितमखण्डं प्रकृतिप्रत्ययादिविभागानाश्रयं पदादि बोधकमित्यखण्डपद-वाक्यस्फोटावित्याहुः।

इत्यखण्डस्फोटनिरूपणम।

**इति व्यक्तिस्फोटनिरूपणम्।**

## अथ जातिस्फोटनिरूपणम्।

४४. जातिस्फोटवादिनस्त्वाहुः—आकृत्यधिकरणन्यायेनावश्य-कत्वाच्च शक्या जातिरिव शक्तापि सैव। 'इदं घटपदम्, इदं घटपदम्,

---

इति भेदः। पदस्फोट इत्यत्र पदशब्दः प्रकृतिप्रत्ययपर इति भावः। वाक्य-स्फोटेऽपि मतभेदमाह—एवमिति।

इत्यखण्डस्फोटनिरूपणम्।

**इति व्यक्तिस्फोटनिरूपणम्।**

४४. एवं व्यक्तिस्फोटमुपवर्ण्य जातिस्फोटमुपवर्णयितुमारभते—**जाति-स्फोटवादिनस्त्विति**। **आकृत्यधिकरणेति**; कर्ममीमांसायां प्रथमेऽध्याये तृतीय-पादे "प्रयोगचोदनाभावादर्थैकत्वमविभागात्" (मीमांसासूत्रम्, १-३-३०) इत्यादिभिः षड्भिः सूत्रैः शब्दानां जातौ शक्तिः शङ्कासमाधानपूर्वकं स्थापिता।

इयं प्रकृतिः, इयं प्रकृतिः, अयं प्रत्ययः, अयं प्रत्ययः, इदं घटमानयेति वाक्यम्, इदं घटमानयेति वाक्यम्' इत्येकाकारप्रतीत्या घटपदज्ञानत्वादिना कारणत्वे कारणतावच्छेदककोटिप्रविष्टतया च जातिविशेषस्यावश्यकत्वात्। न च वर्णानुपूर्व्यैव प्रतीतिकारणत्वयोर्निर्वाहः, घटादेरपि संयोगविशेषविशिष्ट-मृदादिभिरेवान्यथासिद्ध्यापत्तेः। न च क्रमिकवर्णसमुदायस्य यौगपद्यासंभवेन "अनारब्धे तु गोशब्दे गोशब्दत्वं कथं भवेत्" (श्लोकवार्तिकम्. स्फोट. ६६)

---

तत्र व्यक्तिशक्त्यङ्गीकारेऽनेकासु व्यक्तिषु शक्तिः कल्प्या। जातिशक्त्यङ्गीकारे तु जातेरेकत्वात् लाघवमिति युक्तिरप्यभिमता। तयैव युक्त्या वाचकत्वमपि जातेरेव। अनेकशब्दव्यक्तीनां वाचकत्वापेक्षयैकस्या जातेर्वाचकत्वे लाघवादिति भावः। **आवश्यकत्वाच्चेति;** व्यक्तिशक्तिवादिनां मतेऽपि जातिरुपलक्षकतयावश्यमाश्रय-णीया। तथाचावश्यकत्वात् सैव वाचिकास्त्विति भावः। **सैव;** जातिरेव। अनेका-नुगतस्यैव सामान्यस्य जातित्वात् अनेकानुगतिमाह—**इदं घटपदमिति**। इदं पदस्फोटविषयकम्। इयं **प्रकृतिरयं** प्रत्यय इति वर्णस्फोटविषयकम्। इदं **घटमानयेति वाक्यमिति** वाक्यस्फोटविषयकमिति मन्तव्यम्। आवश्यक-त्वमाह—**घटपदेति**। अन्यथासिद्धिमाशङ्क्य समाधत्ते—**न चेति**। हेतुमाह—**घटादेरपीति**। एवंच 'अयं घटः' इति प्रतीत्यनुरोधेन यथा मृदपेक्षया घटपदार्थः पृथगङ्गीक्रियते, तद्वत् वर्णापेक्षया पदवाक्ये इत्यर्थः। वर्णानां क्रमिकत्वात् कथं तत्समुदायरूपपदवाक्यसिद्धिरित्याशङ्क्य समाधत्ते—न चेति। **तत्र;**

इति न्यायेन जातिर्दुरुपपादेति वाच्यम्, प्रागुक्तरीत्या एकबुद्धिविषयीकृते तत्संभवात्। तस्माज्जातिरेव शक्ता तादात्म्येन तदवच्छेदिका च। निरवच्छिन्नैव वा, जातौ शक्तेरेकत्वेनानुगमकाकाङ्क्षाया अभावात्। जातिविशेषस्य चानुपूर्वीविशेषविशिष्टा वर्णा व्यञ्जकाः, आकारविशेष इव घटत्वादेः। अतः 'सरो रसः' इत्यादौ न बोधाविशेषः।

४९. ननु जातेः प्रत्येकं वर्णेषु सत्त्वात् प्रत्येकादर्थबोधापत्तिरिति चेन्न, अनेकव्यक्त्यभिव्यङ्ग्यवर्णसमुदाये तस्या व्यासज्यवृत्तित्वादक्षतेः। तदुक्तं हरिणा—

---

गोशब्दे। **दुरुपपादेति**; सति हि कुड्ये तत्र चित्रलेखनमिति भावः। **प्रागुक्तरीत्येति**; पूर्वपूर्ववर्णविशिष्टेत्यादिना प्रागुक्तरीत्येत्यर्थः। **तदवच्छेदिका**; शक्तत्वावच्छेदिका। तादात्म्येन जातिरेव शक्तत्वावच्छेदिकेति पूर्वमुक्तम्। अथवा निरवच्छिन्नैव सा शक्तिति न दोष इत्याह—**निरवच्छिन्नैवेति**। वर्णानां व्यञ्जकत्वे तयोरविशेषात् 'सरो रसः' इत्यादौ बोधाविशेषमाशङ्क्याह—**जातिविशेषस्येति**। **आकारविशेष इति**; पृथुबुध्नोदराद्याकारविशेष इत्यर्थः।

४९. जातेर्वाचकत्वे दोषमाशङ्कते—**नन्विति**। **वर्णेषु सत्त्वादिति**; जातेर्वर्णसमुदायरूपपदादिवृत्तित्वात् समुदायस्य चावयवानतिरेकात् जातेर्व्यासज्यवृत्तित्वासंभवात् प्रत्येकवर्णादप्यर्थबोधापत्तिरिति भावः। **प्रत्येकादिति**; पदान्तर्गततत्तद्वर्णादित्यर्थः। समाधत्ते—**अनेकेति**। **व्यक्त्यभिव्यङ्ग्येति**; ध्वन्यभिव्यङ्ग्येत्यर्थः। अनेकाभिर्ध्वनिव्यक्तिभिर्वर्णा अभिव्यज्यन्ते। तेन वर्णसमुदायेन जातिरभिव्यज्यत इति जातिर्वर्णसमुदाये व्यासज्यवृत्तिरित्यर्थः।

"अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता।
कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः॥"
(वाक्यपदीयम् १-९४)

इति। अनेकाभिर्वर्णव्यक्तिभिः व्यङ्ग्या जातिरेव स्फोटो वाचिकाभिप्रेता कैश्चित्। तद्व्यञ्जकव्यक्तयश्च ध्वनय एव, न तदतिरिक्ता इति तदर्थः। इदमेवाभिप्रेत्योक्तं काव्यप्रकाशे—"बुधैर्वैयाकरणैः प्रधानीभूत-

---

तत्राभियुक्तसंमतिमाह—तदुक्तमिति। अनेकेत्यादि; अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता; वाचकतया स्मृतेत्यर्थः। अयं भावः—यद्यपि वर्णस्फोटपक्ष उक्तो दोषोऽस्ति, तथापि पदवाक्यस्फोटपक्षयोर्न दोषः; तत्र तस्या व्यासज्यवृत्तित्वेन प्रत्येकवर्णवृत्तित्वाभावात्। जातेर्व्यासज्यवृत्तित्वं तु धर्मिग्राहकप्रमाणसिद्धम्। तथाहि—धर्मिणी हि जातिः पदवाक्ययोर्बोधकत्वान्यथानुपपत्त्या लाघवसहकृतया कल्प्यते। सा च सिध्यन्ती व्यासज्यवृत्तिरेव सिध्यतीत्यर्थः। वर्णानां स्थाने ध्वनीन् निधाय तेषामेव स्फोटव्यञ्जकत्वमिति केषांचिन्मतमाह—कैश्चिदिति। व्यक्तय एव; व्यञ्जकव्यक्तय एव। अस्याः; जातेः। ध्वनित्वेनेति; तद्धेतोरिति न्यायेन ध्वनीनामेव जातिव्यञ्जकत्वमङ्गीक्रियताम, किं मध्ये वर्णैरिति तेषां भावः। कारिकां विवृणोति—अनेकेति। पूर्वार्धे व्यक्तिशब्दो वर्णपर इति भावः। स्फोटो वाचिकेति; स्फोटशब्दोऽत्र यौगिक इति भावः। उत्तरार्धस्य भावमाह—तद्व्यञ्जकेति। व्यक्तिशब्दो ध्वनिपर इति भावः। उक्तार्थे वृद्धसंमतिमाह—इदमेवेति। काव्यप्रकाश इति; "इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः" (काव्यप्रकाशः, १-४.) इति पद्यव्याख्यान इति

स्फोटरूपव्यञ्जकशब्दस्य ध्वनिरिति व्यवहारः कृतः" (काव्यप्रकाशः, १-४) इति। सा च जातिर्ज्ञातैव वाचिका। एतेन स्फोटस्य सदातनत्वात् सदार्थबोधापत्तिरिति परास्तम्। जातिश्चाविद्यको धर्मविशेषः। यद्वा तत्तदुपाध्यवच्छिन्नब्रह्मसत्तैव जातिः। तदुक्तं हरिणा—

---

भावः। प्रधानीभूतं स्फोटरूपं यद् व्यङ्ग्यं तद्व्यञ्जकशब्दस्येत्यर्थः। जातिस्फोटे विशेषमाह—सा चेति; जातिश्चेत्यर्थः। ज्ञातैवेति; न तु स्वरूपसतीत्यर्थः। यदाहुः—

"विषयत्वमनापन्नैः शब्दैर्नार्थः प्रतीयते।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः॥
अतोऽनिर्ज्ञातरूपत्वात्किमाहेत्यभिधीयते।
नेन्द्रियाणां प्रकाश्येऽर्थे स्वरूपं गृह्यते तथा॥"

(वाक्यपदीयम्, १-५६, ५७)

इति। तस्य प्रयोजनमाह—एतेनेति। ज्ञाताया एव वाचकत्वाङ्गीकारेणेत्यर्थः। **सदातनत्वात्**; नित्यत्वात्। ननु का नामेयं जातिः? या स्फोटत्वेनोपवर्ण्यते। यद्यनुगतप्रतीतिविषयत्वम्, यथा 'अयं घटः' इत्यनुगतप्रतीतिविषयत्वात् घटत्वं जातिः, तदा घटशब्दानुगतप्रतीतिविषया सेति वक्तव्यम्। घटशब्दानुगतप्रतीतिविषयश्च घकारटकाररूपवर्णसमुदाय एवेति वर्णस्फोट एव पर्यवस्यतीति घट्टकुट्यां प्रभातं भवति। यदि मृत्पिण्डाद्विलक्षणं घटत्वमिव वर्णसमुदायाद्विलक्षणं घटशब्दत्वं नाम किंचित् जातिरित्युच्यते, तदापि तस्य घटशब्दनिष्ठतया घटशब्दादन्यत्वं स्यात्; घटशब्देनान्यथासिद्धिश्चेत्याशङ्क्य निर्विशेषाद्वैतमतसर्वस्वभूतं प्रपञ्चब्रह्माभेदं ब्रह्मेतरमिथ्यात्वं चाश्रित्य स्फोटवादमुपपादयति—**जातिश्चेति**। **आविद्यक** इति; अविद्याकल्पित इत्यर्थः। **धर्मविशेषः**; शब्दनिष्ठ

"संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ।
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ॥"

(वाक्यपदीयम् ३, जाति. ३३, ३४)

इति । एवं च वाच्यं वाचकं च ब्रह्मैवेति ध्येयम् । शास्त्रीयप्रक्रिया तु जातिव्यञ्जकबोधार्था प्राग्वदेवेति सर्वेष्टसिद्धिः ।

इति जातिस्फोटनिरूपणम् ।

---

इत्यादिः । एवं च शब्दानां तन्निष्ठजातेश्चाविद्यकत्वान्न शङ्कावकाश इति भावः । अथ जातेर्महासत्तारूपतामङ्गीकृत्य ब्रह्मस्वरूपतामाह—यद्वेति । तत्तदिति ; घटपटशब्दादीत्यर्थः । ब्रह्मसत्तैवेति ; ब्रह्मरूपिणी महासत्तेत्यर्थः । सन्निव्यनुगतप्रतीतिविषयभूता हि सत्ता परमार्थसद्ब्रह्मैवेत्यर्थः । अत्राभियुक्तसंमतिमाह—तदुक्तमिति । संबन्धिभेदादिति ; उपाधिभेदादित्यर्थः । सत्तैव ; महासत्तैव । गवादिषु भिद्यमाना ; गोत्वादिरूपसत्ताविशेषेण भिद्यमानेत्यर्थः । तस्याम् ; सत्तारूपायां जात्याम् । सर्वे शब्दाः ; गवादयः शब्दाः । व्यवस्थिताः ; नियमिताः । सा ; महासत्तैव । ताम् ; महासत्ताम् । एवं च सत्तारूपं ब्रह्मैव वाचकं वाच्यं चेति न किमपि तदतिरिक्तं वस्तु सदिति न कस्या अपि शङ्काया अवसर इति भावः । तदाह—एवं चेति । जातिव्यञ्जकबोधार्थेति ;

एते च सर्वे पक्षाः स्थानिवत्सूत्र-पस्पशाह्निक-अइउणितिसूत्र-प्रत्याहाराह्निकान्तादिसूत्रस्थभाष्यकैयटादिषु तत्र तत्राकरग्रन्थेषु सूक्ष्मदृशां स्फुटा एव ।

अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितात् ।
न्यायतन्त्रं रामरामाद् वादिरक्षोघ्नरामतः ॥
वैयाकरणनागेशः स्फोटायनऋषेर्मतम् ।
परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः ॥
दृढस्तर्केऽस्य नाभ्यास इति चिन्त्यं न धीयुतैः ।
दृषदोऽपीह संतीर्णाः पयोधौ रामयोगतः ॥

इत्युपाध्यायोपनामकशिवभट्टसुतनागेशविरचितः
स्फोटवादः समाप्तः ।

---

जातेर्व्यञ्जको यः शब्दः, तद्बोधार्थेत्यर्थः । पूर्वोक्तानामष्टविधानां स्फोटानां सांप्रदायिकत्वं प्रामाणिकत्वं चाह—एते चेति । सर्वे पक्षाः ; वर्णस्फोटादयोऽष्टौ पक्षाः । **सूक्ष्मदृशाम्** ; ऊहापोहकुशलधिषणानाम् ।

स्वकृतस्य ग्रन्थस्य सांप्रदायिकार्थबोधकत्वं तत एव प्रेक्षावदुपादेयत्वं चाभिधातुं स्वस्य गुरुसंप्रदायागतविद्यत्वमाह—**अधीत्येति** । **हरिदीक्षितात्** ; तन्नाम्नो भट्टोजिदीक्षितपौत्रात् वीरेश्वरपुत्रात् । एवं पदतन्त्रसंप्रदायमुक्त्वा न्यायतन्त्रसंप्रदायमाह—**न्यायतन्त्रमिति** । **रामरामात्** ; तन्नामकाद्गुरोः । **वादिरक्षोघ्नरामत** इति रूपकम् । **वैयाकरण इति** ; स्वस्य विशिष्य व्याकरणाभिनिवेशि-

त्वमाह । स्फोटायनेति ; अनेन स्फोटवादस्य सांप्रदायिकत्वमार्षत्वं चाभिहितम् । रामयोगत इति ; रामरामनाम्नो गुरोः संबन्धात् , श्रीरामचन्द्रस्य दाशरथेर्योगादिति च श्लेषः ।

इत्थं नागेशभट्टोदितमतिगहनं स्फोटवादं सुबोधं
व्याचख्यौ शब्दतन्त्रप्रसृमरधिषणानैपुणः कृष्णसूरिः ।
विश्वस्मिन्नामरूपाण्यनुविदधदसावागमानां प्रवक्ता
वाचां तात्पर्यभूमिः प्रणवतनुरतः प्रीयतां देवदेवः ॥

**वैयाकरणमूर्धन्यमणिना कृष्णसूरिणा ।**
**रचिता स्फोटवादस्य व्याख्या नाम्ना सुबोधिनी ॥**

---

## ERRATA

| Page | Line | Read |
| --- | --- | --- |
| २ | Heading | स्फोटवाद: |
| ३ | ९ | केऽपि |
| ४ | १२ | पदस्फोट |
| ४८ | १३ | विषय० |
| ७१ | Heading | अखण्डस्फोट: |

# अनुबन्धः १

## उदाहृतानां ग्रन्थान्तरस्थवाक्यानामनुक्रमणिका

[The Arabic figures indicate the pages of the Upodghāta and the Hindi figures the pages of the Text.]

| वाक्यानि | आकरः |
|---|---|
| अकर्तरि च कारके, ५. | अष्टाध्यायी, ३-३-१९. |
| अतोऽनिर्ज्ञातरूपत्वात्, १००. | वाक्यपदीयम्, १-५७. |
| अथ गौरित्यत्र कः शब्दः, 25. | महाभाष्यम्, पस्पशाह्निकम्. |
| ,, २, 2. | शाबरभाष्यम्, १-१-१. |
| अथवोभयत्र स्फोटमात्रं, 15. | महाभाष्यम्, प्रत्याहाराह्निकम्, सू. ४. |
| अथ शब्दब्रह्मैव सृजति, 18. | न्यायमञ्जरी, Vol. II, p. 102, Kāsi Sans. Series, 106. |
| अथाप्यनन्तरः पक्षः, 19. | तत्त्वसंग्रहः, Vol. I, p. 67, Gaek. Ori. Series, 30. |
| अनन्यलभ्यः शब्दार्थः, १५. | शास्त्रदीपिका, ३-४-१९. |
| अनादिनिधनं ब्रह्म, 15, 17. | वाक्यपदीयम्, १-१. |
| अनारब्धे तु गोशब्दे, 26, ९७. | श्लोकबार्तिकम्, p. 526, Verse 61, Chow. Sans. Series, 3. |
| अनुभवपूर्वकत्वं हि, 27. | हेलाराजीयम् (काल), Verse 89. |
| अनेकव्यक्त्यभिव्यङ्ग्या, ९९. | वाक्यपदीयम्, १-९४. |
| अन्नं ब्रह्मेति व्यजानात्, ९३. | तैत्तिरीयोपनिषत, १-३-२. |
| अभिव्यक्ता परा शक्तिः, 22. | शारदातिलकव्याख्या, १-७, Tantric Texts, Vol. 16. |
| अयमभिसंधिः - अर्थ, 11. | योगसूत्रभाष्यव्याख्या (वाचस्पत्य), ३-१७. |
| अर्थवन्ति चानर्थकानि च, १०. | महाभाष्यम्, १-१-१. |

14

| वाक्यानि | आकर: |
| --- | --- |
| अर्थेनैव विशेषो हि, ४३. | न्यायकुसुमाञ्जलि:, ४-४; तत्त्वसंग्रह:, p. 694, Vol. II, Gaek. Ori. Series, 31. |
| अर्थे विशिष्य संबन्धा, १५. | वैयाकरणभूषणसार:, ६३. |
| अर्थैकत्वादेकं वाक्यं, ७८. | मीमांसासूत्रम्, २-१-४६. |
| अशाब्दो यदि वाक्यार्थ:, २१. | वाक्यपदीयम्, २-१६. |
| अष्टौ स्थानानि वर्णानाम्, 20. | पाणिनीयशिक्षा, १३. |
| असत्या यदि पश्यन्ती, 18. | शिवदृष्टि:, २-२४. |
| अस्माच्च कारणबिन्दो:, 22. | सौभाग्यभास्कर:, १३२. |
| आचार्यो मातुलश्चेति, ४७. | वाक्यपदीयम, क्रियासमुद्देश:, ६३. |
| आदेशास्तर्हीमे भविष्यन्ति, 24. | महाभाष्यम्, १-१-२०. |
| आदौ तावदिन्द्रियत्वे, 21. | शिवदृष्टि:, १२. |
| आद्गुण:, ९. | अष्टाध्यायी, ६-१-८७. |
| आधाराद् द्व्यङ्गुलादूर्ध्वम्, 17. | संगीतरत्नाकर:, १-२-१२१. |
| आसत्तिरपि मन्दस्य, ४९. | लघुमञ्जूषा, p. 522, Chow. Sans. Series, 46. |
| इति संचक्षते येऽपि, 19. | तत्त्वसंग्रह:, Vol. I, p. 67, Gaekwad's Oriental Series, 30. |
| इदमन्धं तम: कृत्स्नम्, 1. | काव्यादर्श:, १-४. |
| इदमुत्तममतिशायिनि, ९९. | काव्यप्रकाश:, १-४. |
| इन्द्रियत्वेऽपि सामान्ये, 21. | शिवदृष्टि:, १३. |
| इयं चेतनैव; अत एव, 23. | लघुमञ्जूषाव्याख्या कला, p. 178, Chow. Sans. Series, 46. |
| उक्तशक्तिज्ञानजन्यम्, 9. | पदार्थतत्त्वनिर्णय:, Fol. 50, Adyar Library MS. |
| उपाया: शिक्षमाणानाम्, ७१, ९५. | वाक्यपदीयम्, २-२४०. |
| एओङ्। ऐऔच्, ७२. | माहेश्वरसूत्राणि, ३; ४. |
| एकाङ्गुलं देहमध्यम, 17. | संगीतरत्नाकर:, १-२-१४५. |
| एकाजनेकाज्ग्रहणेषु, ८९. | महाभाष्यम्, प्रत्याहाराह्निकम्, १. |
| एङ: पदान्तादति, १०. | अष्टाध्यायी, ६-१-१०९. |

| वाक्यानि | आकर: |
|---|---|
| एवं तर्हि स्फोटः शब्दः, 15. | महाभाष्यम् , १-१-७०. |
| ओंकार एव सर्वा वाक्, 15. | लघुमञ्जूषा, p. 389, Chow. Sans. Series, 46. |
| औत्पत्तिकस्तु शब्दस्यार्थेन, 5. | मीमांसासूत्रम् , १-१-५. |
| कः शब्दोऽभिमतः, 2. | प्रकरणपञ्चिका, p. 87, Chow. Sans. Series, 17. |
| कर्तरि कृत् . ७, ८. | अष्टाध्यायी, ३-४-६७. |
| का तर्हीयं वाचोयुक्तिः, २७ | महाभाष्यम् , १-३-१. |
| कारणबिन्दुर्यदा कार्य, 23. | सौभाग्यभास्करः, १३२. |
| किं तर्हि प्रातिपदिकम् , 6. | न्यायलीलावती, p. 671, Chow. Sans. Series, 64. |
| किं पुनरिदं पदं नाम, 6. | न्यायमञ्जरी, Vol. 2, p. 336, Kās'i Sans. Seriss, 106. |
| कृत्तद्धितसमासाश्च, २१. | अष्टाध्यायी, १-२-४६. |
| कृदतिङ् , ७. | ,, ३-१-९३. |
| क्रमोत्पन्नानामपि तेषाम् , 8. | न्यायमञ्जरी, Vol. 2, p 344, Kās'i Sans. Series, I06. |
| गीतिषु समाख्या, २५. | मीमांसासूत्रम् , २-१-३६. |
| गुदलिङ्गान्तरे चक्रम् , 17. | संगीतरत्नाकरः, १-२-१२०. |
| ततोऽभूत् त्रिवृदोंकारः, 16. | भागवतम् , १२-६-३९. |
| तत्तदाकारं तत्तद्व्यङ्ग्य, 27. | महाभाष्यप्रदीपः, पस्पशाह्निकम् . |
| तत्र वाक्यस्फोट एव, 24. | लघुमञ्जूषा, p. 1, Chow. Sans. Series, 46. |
| तत्र स्वपरश्रोत्रविषया 18. | लघुमञ्जूषाव्याख्या कला, p. 182; ,, |
| तत्प्राप्य कुण्डलीरूपम् , 23. | शारदातिलकम् , १-१४, Tantric Texts, Vol. 16. |
| तदस्यास्त्यस्मिन्निति, ८४. | अष्टाध्यायी, ५-२-९४. |
| तदेकं पदमेकबुद्धि, 11. | योगसूत्रभाष्यम् , ३-१७. |
| तद् द्वारमपवर्गस्य, ९३. | वाक्यपदीयम् , १-१४. |

| वाक्यानि | आकरः |
|---|---|
| तद्धेतोरेव तद्धेतुत्वे, ७१, ८०. | लौकिकन्यायसंग्रहः, p. 12, Pandit Series. |
| तस्मादुच्चै ऋचा क्रियते, २५. | ऐतरेयब्राह्मणम् , ५-५-६. |
| तस्माद्व्यञ्जकध्वनीनाम् , २. | शास्त्रदीपिका, १-१-५. |
| तस्मान्न पदधर्मोऽस्ति, 6. | श्लोकवार्तिकम् . p. 807, Chow. Sans. Series, 3. |
| तस्यादित उदात्तमर्ध, ७२. | अष्टाध्यायी, १-२-३२. |
| तस्मिंस्तस्मिंतु तन्मात्रम् , ३. | विष्णुपुराणम् , १-१-४४. |
| तारत्वादि वायुनिष्ठम् , ८१. | भामती, १-३-२८. |
| तावत्कालं स्थिरं चैनम् , 2, ८६. | श्लोकवार्तिकम् , शब्दनित्यत्वा, श्लो. ३६६, p. 823, Chow. Sans. Series, 3. |
| तिङस्त्रीणि, २७. | अष्टाध्यायी, १-४-१०१. |
| तेषामृग्यत्रार्थवशेन, २५. | मीमांसासूत्रम् , २-१-३५. |
| त्रिः प्रथमामन्वाह, ८९. | महाभाष्यम् , प्रत्याहाराह्निकम् . |
| दश दाडिमानि षडपूपाः, ३६. | ,, १-२-४५. |
| दाधा घ्वदाप् , 24. | अष्टाध्यायी, १-१-२०. |
| दुर्विदग्धैरवक्षिप्ते, 30. | स्फोटसिद्धिः, २. |
| देहेऽपि मूलाधारेऽस्मिन् , 17. | संगीतरत्नाकरः, १-२-१४६. |
| धर्मिकल्पनातो वरं धर्म, ८०. | लौकिकन्यायसंग्रहः. p. 12, Pandit Series. |
| ध्वनिः स्फोटश्च शब्दानाम् , ७४. | महाभाष्यम् , १-१-७०. |
| न च तथेह वर्णानाम् , 10. | भामती, p. 260, Nirṇayasāgar Press, Bombay, 1904. |
| न त्वेते परमार्थतो वर्ण, ८७. | शास्त्रदीपिका, १-१-५. |
| न त्वेवाहं जातु नासम् , ७३. | भगवद्गीता, २-१२. |
| न नञ्पूर्वात्तत्पुरुषात् , ६४. | अष्टाध्यायी, ५-१-१२१. |
| ननु पश्यन्त्यादिविवर्त, 23. | लघुमञ्जूषाव्याख्या कला, p. 117, Chow. Sans. Series, 46. |
| न वा तथेति यद्याद्यः, 19 | तत्त्वसंग्रहः, Vol. I, p. 67, Gaekwad's Oriental Series, 30. |

| वाक्यानि | आकरः |
|---|---|
| न विभक्तौ तुस्माः, २७. | अष्टाध्यायी, १-३-४. |
| न विमुञ्चन्ति सामर्थ्यम्, ५४. | श्लोकवार्तिकम्, वाक्या. २२९. |
| न सन्नासन्न सदसत्, ९५. | सर्वार्थसिद्धिः, ४-१८. |
| न सोऽस्ति प्रत्ययो लोके, ७९. | वाक्यपदीयम्, १-१२४. |
| न ह्यक्षैः केऽपि वर्णा, ३. | तत्त्वमुक्ताकलापः, ४-८७. |
| नादैराहितबीजायाम्, ९. | वाक्यपदीयम्, १-८५. |
| नार्थस्य वाचकः स्फोटः, २. | श्लोकवार्तिकम्, स्फोट. १३३. |
| नासतो विद्यते भावः, ८८. | भगवद्गीता, २-१६. |
| निरस्तभेदं पदतत्त्व, ४, 29. | स्फोटसिद्धिः, ३६. |
| नौद्व्यचः, ८९. | अष्टाध्यायी, ४-४-७. |
| पदजातं श्रुतं सर्वम्, २१. | प्रकरणपञ्चिका, Chow. Sans. Series, 17; तन्त्ररहस्यम्, शब्दपरिच्छेदः. |
| पदप्रकृतिः संहिता, 25. | ऋक्प्रातिशाख्यम्, २-१. |
| पदप्रकृतिभावश्च, 26. | वाक्यपदीयम्, २-५९. |
| पदमभ्यधिकाभावात्, २२. | श्लोकवार्तिकम्, शब्द. १०७. |
| पदार्थानां तु मूलत्वम्, ६६. | ,, वाक्या. १११. |
| पदे न वर्णा विद्यन्ते, ७४. | वाक्यपदीयम्, १-७३. |
| परस्परव्यपेक्षां सामर्थ्यम्, १६. | महाभाष्यम्, २-१-१. |
| पश्यतः श्वेतमारूपम्, ६७. | श्लोकवार्तिकम्, वाक्या. ३५७. |
| पूर्वभागेषु वाक्यस्य. २३. | शास्त्रदीपिका, १-१, अधि. ७. |
| पूर्ववर्णजनितसंस्कार, २, 4. | शाबरभाष्यम्, १-१-५. |
| प्रतीत्यप्रतीतिभ्यां न, ३, 10. | सांख्यसूत्रम्, ५-५७. |
| प्रत्यक्षमनुमानं च, 1. | मनुस्मृतिः, १२-१०५. |
| प्रत्येकवर्णानुभवजनित, 9. | तत्त्वबिन्दुः, p. 7, Annamalai University Series, 3. |
| प्रत्येकवर्णेभ्योऽतिरिक्तम्, 10. | सांख्यसूत्रभाष्यम्, ५-५७. |
| प्रयोगचोदनाभावात्, ९६. | मीमांसासूत्रम्. १-३-३०. |
| बहुवचनस्य वस्नसौ, १०. | अष्टाध्यायी, ८-१-२१. |
| बहु स्यां प्रजायेय, 16. | छान्दोग्योपनिषत्, ६-२-३ |

| वाक्यानि | आकरः |
|---|---|
| बुधैर्वैयाकरणैः प्रधानी, ९९. | काव्यप्रकाशः, १-४. |
| भावप्रधानमाख्यातम्, २७. | यास्कनिरुक्तम्, १-१. |
| भूतोत्पत्तेः पुरा भूमा, ६५. | पञ्चदशी, २-१४. |
| भूवादयो धातवः, ३. | अष्टाध्यायी, १-३-१. |
| मात्रं कार्त्स्न्येऽवधारणे, ३२. | नामलिङ्गानुशासनम्, ३-३-१७८. |
| यतो वाचो निवर्तन्ते, 21. | तैत्तिरीयोपनिषत्, १-२-४. |
| यत्रोभयोः समो दोषः, ४१, २६. | सांख्यसूत्रानिरुद्धवृत्तिः, १-६. |
| यथा मणिकृपाणादौ, 14, ७५. | स्फोटतत्त्वनिर्णयः, ११. |
| यद्यपि स्मृतिहेतुत्वम्, 4, 13. | श्लोकवार्तिकम्, p. 536, Chow. Sans. Series, 3. |
| यद्यपीहाष्टौ स्फोटाः, 24. | शब्दकौस्तुभः, p. 11. ,, 2. |
| यद्वा प्रत्यक्षतः पूर्वम्, 4. | श्लोकवार्तिकम्, p. 538, Chow. Sans. Series, 3. |
| यादृग्भिः स्फोटधीस्ते, ३. | तत्त्वमुक्ताकलापः, ४-८८. |
| यावद्गकारे वाग्वर्तते, 13. | महाभाष्यम्, १-४-१०९. |
| लः कर्मणि च भावे च, ३, ७, ८. | अष्टाध्यायी, ३-४-६९. |
| लटः शतृशानचावप्रथमा, ८. | ,, ३-२-१२४. |
| वर्णाः स्वज्ञानसंस्कारैः 9. | शब्दनिर्णयः, १२. |
| वर्णानित्यत्वं तु न श्रुत्यादि, 10. | न्यायपरिशुद्धिः, p. 12, Brahmavādin Press, Madras, 1913. |
| वर्णा वा ध्वनयो वापि, २. | श्लोकवार्तिकम्, स्फोटवादः, श्लो. १३१, Chow. Sans. Series, 3. |
| वर्णेष्ववयवा न च, ७३. | वाक्यपदीयम्, १-७३. |
| वर्णेष्वेव प्रत्यक्षेषु, 5. | प्रकरणपञ्चिका, प्रमाणपारायणम्, p. 89, Chow. Sans. Series, 17. |
| वर्णैकदेशा वर्णग्रहणेन, ७२. | महाभाष्यम्, प्रत्याहाराह्निकम्. |
| वर्णोच्चारणकारणमिन्द्रियम्, 20. | न्यायसिद्धाञ्जनम्, p. 42, S'ri-Vaiṣṇava Grantha Mālā No. 1. |
| वस्तुतः ककारादतिरिच्य, ९२. | तत्त्वबिन्दुः, p. 16, Annamalai University Series, 3. |

| वाक्यानि | आकरः |
|---|---|
| वस्तुतस्तु स्मृतेः प्रामाण्यम् , 8. | न्यायपरिशुद्धिः, p. 484, Chow. Sans. Series, 51. |
| वाक्यं गोपदयुक्तं यत् , २३. | शास्त्रदीपिका, १-१, अधि. ७. |
| वाक्यस्थेषु खलु वर्णेषु, 6. | न्यायसूत्रभाष्यम , ३-२-६२. |
| वाक्यार्थो लक्ष्यमाणो हि, ५४. | लघुमञ्जूषा, p. 434, Chow. Sans. Series, 46. |
| वाक्येनैव हि वाक्यार्थः, २३. | शास्त्रदीपिका, १-१, अधि. ७. |
| वाचा विरूप नित्यया, 21, ९०. | तैत्तिरीयसंहिता, २-६-११-२. |
| विग्रहो हविरादानम् , १२. | Miscellaneous. |
| विभक्तिश्च, २७. | अष्टाध्यायी, १-४-१०४. |
| विशेषणं विशेष्येण, ५. | ,, २-१-५७. |
| विषयत्वमनापन्नैः, १००. | वाक्यपदीयम् , १-५६. |
| वृत्तिं विना शाब्दबोध, ५६. | तत्त्वविवेकः, p. 68, Pandit Series, Vol. 25. |
| वृद्धिरादैच् , १०. | अष्टाध्यायी, १-१-१. |
| वेदानधीत्य वेदौ वा. २५. | मनुस्मृतिः, ३-२. |
| वेदो वा प्रायदर्शनात् , २४. | मीमांसासूत्रम् , ३-३-१. |
| वैखरीस्वरूपं तु तत्र, 18. | कर्पूरमञ्जरीव्याख्या पदार्थदीपिका, R. No. 2749, Madras Govt. Ori. MSS. Library. |
| वैखर्या मध्यमायाश्च, 18. | वाक्यपदीयम् , १-१४४. |
| वैयाकरणनागेशः, 15, | स्फोटवादः, p. 102 of this edition. |
| वैयाकरणा वर्णातिरिक्त, 25. | महाभाष्यप्रदीपः, पस्पशाह्निकम् . |
| शक्तिग्रहं व्याकरणोपमान, ७. | सिद्धान्तमुक्तावलिः, ४. |
| शक्यत्व इव शक्तत्वे, 26. | वैयाकरणभूषणसारः, ७१. |
| शब्दब्रह्मेति शब्दार्थम् , 19. | शारदातिलकम् , p. 19, Tantric Texts, Vol. 16, Part I. |
| शब्दस्यैकरूपत्वमपि, 9. | श्रीभाष्यम् , १-१-९. |
| शब्दार्थप्रत्ययानामितरेतरा. 11. | योगसूत्रम् , ३-१७. |
| शब्दो ब्रह्मेति यत्तन्मुनिभिः, ३. | तत्त्वमुक्ताकलापः, ४-८९. |

| वाक्यानि | आकरः |
|---|---|
| शिरश्छेदेऽपि शतं न ददामि, २०. | आत्मतत्त्वविवेकः, p. 271, Asiatic Society of Bengal, 1939. |
| शृणोति य इमं शब्दम्, 16. | भागवतम्, १२-६-४०. |
| शेषे यजुःशब्दः, २५. | मीमांसासूत्रम्. २-१-३६. |
| शैत्यं हि यत्सा प्रकृतिः, १८. | रघुवंशः, ५-५४. |
| श्रुतेर्जाताधिकारः स्यात्, २४. | मीमांसासूत्रम्, ३-३-१. |
| श्रोत्रोपलब्धिर्बुद्धि, 21. | महाभाष्यम्, १-१-६९. |
| संबन्धिभेदात्सत्तैव, 27, १००. | वाक्यपदीयम्, ३, जाति. ३३. |
| स एव जगदङ्कुरकन्द, 22. | सौभाग्यभास्करः १३२. |
| सत्यं व्युत्पत्तिरेवं स्यात्, २३. | शास्त्रदीपिका, १-१, अधि. ७. |
| सत्यपि समस्तवर्ण, 9. | ब्रह्मसूत्रशांकरभाष्यम्, १-३-२८. |
| सत्त्वे न भ्रान्तिबाधौ स्ताम्, ९५. | इष्टसिद्धिः, १-९. |
| सद्विलक्षणत्वे सति, ९५. | अद्वैतसिद्धिः, p. 621, Nirnayasagar Press, Bombay, 1917. |
| सप्तदश सामिधेन्यो भवन्ति, ८९. | महाभाष्यम्, प्रत्याहाराह्निकम्. |
| समासाच्च तद्विषयात्, ९०. | अष्टाध्यायी, ५-३-१०६. |
| समाहितात्मनो ब्रह्मन्, 16. | भागवतम्, १२-६-३७. |
| सर्व इति ; आगमा अपि, 25. | महाभष्यप्रदीपः, १-१-२०. |
| सा तत्त्वसंज्ञा चिन्मात्रा, 22. | प्रपञ्चसारः, १-४१, Tantric Texts, Vol. 18. |
| सा नित्या सा महानात्मा, 27, १०१. | वाक्यपदीयम्, ३, जाति. ३४. |
| सामान्यार्थस्तिरोभूतः, २१, २२. | ,, २-१५. |
| सावेकाचः, ९०. | अष्टाध्यायी, ६-१-१६८. |
| सुप्तिङन्तं पदम्, १०. | ,, १-४-१४. |
| स्वधाम्नो ब्रह्मणः साक्षात्, 16. | भागवतम्, १२-६-४१. |

## अनुबन्धः २

# उदाहृतग्रन्थानामनुक्रमणिका

[The Arabic figures indicate the pages of the Introduction and the Hindi figures the pages of the Text.]


PAGES

अद्वैतसिद्धिः . . . ९५
अनुव्याख्यानन्यायसुधा . ७६, ८०
अष्टाध्यायी ३, ५, ७, ८, ९, १०, २१, 24, २७, ६४, ७२, ८४, ८९, ९०
आत्मतत्त्वविवेकः. . . २०
इष्टसिद्धिः . . . ९५
ऋक्प्रातिशाख्यम् . . 25
ऐतरेयब्राह्मणम् . . २५
कर्पूरमञ्जरीव्याख्या . . 18
काव्यप्रकाशः . . . ९९
काव्यादर्शः . . . 1
छान्दोग्योपनिषत् . . 16
तत्त्वबिन्दुः . . . 9, ९२
तत्त्वमुक्ताकलापः . . ३
तत्त्वविवेकः . . . ५६
तत्त्वसंग्रहः . . . 19, ४३

PAGES

तैत्तिरीयसंहिता . . . 21, ९०
तैत्तिरीयोपनिषत् - . 21, ९३
नामलिङ्गानुशासनम् . . ३२
निरुक्तम् . . . २७
न्यायकुसुमाञ्जलिः . . ४३
न्यायपरिशुद्धिः . . 8, 10
न्यायमञ्जरी . . 6, 8, १८
न्यायरक्षामणिः . . . ७८
न्यायलीलावती . . . 6
न्यायसिद्धाञ्जनम् . . 20
न्यायसिद्धान्तमुक्तावलिः . . ७
न्यायसूत्रभाष्यम् . . 6
पञ्चदशी . . . ६५
पदार्थतत्त्वनिर्णयः . . 9
परिमलः . . ७७, ७८
पाणिनीयशिक्षा . . . 20
प्रकरणपञ्चिका . . . 2, २१

PAGES

प्रपञ्चसारः . . . 22
ब्रह्मसूत्रशांकरभाष्यम् . . 9
भगवद्गीता . . ७३, ८८
भागवतम् . . . 16
भामती . . . 10, ८१
मनुस्मृतिः . . . 1, २५
महाभाष्यम् १०, 13, 15, १६, 21, 24, 25, २७, ३६, ७४, ८९
महाभाष्यप्रदीपः . . 25, 27
माहेश्वरसूत्रम् . . . ७२
मीमांसासूत्रम् . 5, २४, २५, ७८, ९६
योगसूत्रम् . . . 11
योगसूत्रभाष्यम् . . . 11
योगसूत्रभाष्यव्याख्या . . 11
रघुवंशः . . . १८
लघुमञ्जूषा . . 15, ४९, ५४
लघुमञ्जूषाव्याख्या कला . 18, 23
लौकिकन्यायसंग्रहः . . ७१, ८०
वाक्यपदीयम् ९, 18, २१, २२, 26, 27, ४७, ७१, ७३, ७४, ७५, ७९, ९३, ९५, ९९, १००, १०१

PAGES

विष्णुपुराणम् . . . ३
वैयाकरणभूषणसारः . . १५, 26
शब्दकौस्तुभः . . . 24
शाबरभाष्यम् . . . २, 4
शाब्दनिर्णयः . . . 9
शारदातिलकम् . . . 19, 23
शारदातिलकव्याख्या . . 22
शास्त्रदीपिका . २, २३, १५, ८७
शिवदृष्टिः . . 18, 21
श्रीभाष्यम् . . . 9
श्लोकवार्तिकम् २, 4, 6, 13, २२, २३, 26, ५४, ६६, ६७, ८६
संगीतरत्नाकरः . . . 17
सर्वार्थसिद्धिः . . . ९५
सांख्यसूत्रम् . . . ३, 10
सांख्यसूत्रभाष्यम् . . 10
सांख्यसूत्रानिरुद्धवृत्तिः . . 26, ४१
सौभाग्यभास्करः . . 22, 23
स्फोटतत्त्वनिर्णयः . . 14, ७५
स्फोटवादः . . . 15
स्फोटसिद्धिः . . . ४, 29
हेलाराजीयम् . . . 27

---